# अथ सप्तर्ष्युपाख्यनरहरिभट्टविरचितस्संस्कारनृसिंहः ।

श्री ५ महाराज सर कृष्णप्रतापशर्म्म साही बहादुर के. सी. आइ. ई.

इत्युआधीशाज्ञया अधिकारिजनोपकारार्थङ्काश्याम्मेडिकल् हालाख्य-
यन्त्रालये मुद्रयित्वा प्रकाशितः ।

सम्वत् १९५० चैत्रकृष्ण एकादश्याम् सोमे ।

॥ श्रीः ॥

# अथानुक्रमणिका




| | प० | पृ० | पं० |
|---|---|---|---|
| मङ्गलाचरणम् | १ | १ | १ |
| संस्कारप्रकारकथनम् | १ | १ | ४ |
| संस्काराधिकारिणः | १ | १ | ८ |
| गृह्यकारिकोक्तसंस्काराः | १ | २ | २ |
| तत्राप्यधिकारिणः | १ | २ | ५ |
| संस्कारफलम् | १ | २ | ६ |

| | प० | पृ० | पं० |
|---|---|---|---|
| तत्रमूलम् | १ | २ | ८ |
| प्रथमर्तौ निन्द्यमासादयः | २ | १ | १ |
| तत्र वस्त्रविचारः | २ | १ | ७ |
| गृहविचारः | २ | १ | ७ |
| प्रथमर्तौ स्त्रीसेव्यपदार्थाः | २ | १ | ८ |
| द्वितीयादिऋतुप्राप्तौ वर्जनीयानि | २ | १ | ८ |
| रजस्वलानियमाः | २ | २ | २ |
| प्रथमर्तौ चतुर्थेऽह्निभर्तृगमननिषेधः | २ | २ | ४ |
| प्रथमर्तौशान्तिविचारः | २ | २ | ५ |
| शान्तिविधिः | २ | २ | ७ |
| तत्र नारदोक्ताशान्तिः | ३ | १ | ५ |
| वशिष्ठोक्ताशान्तिः | ३ | २ | ४ |

| | प० | पृ० | पं० |
|---|---|---|---|
| वराहपुराणोक्ताशान्तिः | ४ | २ | ३ |
| अकालेदुष्टरजसिवस्त्र-त्यागपूर्विकाशान्तिः | ५ | २ | ६ |
| शौनकोक्ताशान्तिः | ६ | १ | ५ |
| शान्तिचतुष्टये का कैः कार्यैतिनिर्णयः | ६ | १ | ८ |
| गर्भाधाने कालविचारः | ६ | २ | १ |

| | प० | पृ० | पं० |
|---|---|---|---|
| गर्भाधानविधिः | ६ | २ | ७ |
| गर्भाधानाकरणे प्राय-श्चित्तम् | ८ | १ | ४ |
| पुंसवनम् | ८ | १ | ६ |
| सीमन्तोन्नयनम् | ९ | २ | ६ |
| सीमन्तोन्नयनस्याव-श्यकता | १५ | २ | १ |

| | प० | पृ० | पं० |
|---|---|---|---|
| गर्भिणीधर्म्माः | १५ | २ | ५ |
| गर्भिणीपतिधर्म्माः | १६ | २ | १ |
| जातकर्म्म | १६ | २ | ७ |
| अवरावपतनम् | १७ | १ | ३ |
| जातकर्मविधिः | १७ | १ | ६ |
| आयुष्यकरणम् | १८ | २ | ७ |
| काम्यकुमाराभिमर्शनम् | १९ | १ | ८ |

| | प० | पृ० | पं० |
|---|---|---|---|
| जातकर्म्मकालातीते-नियमः | २० | १ | ६ |
| मातृसंस्कारपूर्वकस्तन-दानविधिः | २० | २ | १ |
| पुत्रोत्सवेसुवर्णादिदानम् | २१ | १ | १ |
| नालच्छेदनम् | २१ | १ | ४ |

| | प० | पृ० | पं० |
|---|---|---|---|
| सूतिकाशिरः प्रदेशेउद-पात्रस्थापनम् | २१ | १ | ५ |
| सूतिकाद्वारदेशेदशादि-नहोमविधिः | २१ | २ | १ |
| जातकर्माङ्गब्राह्मण-भोजनम् | २२ | १ | ३ |

| | प० | पृ० | पं० |
|---|---|---|---|
| जन्मारिष्टनिवारको-ग्रहादिदानकालः | २२ | १ | ५ |
| जातकर्मावश्यकता | २२ | १ | ५ |
| कुमारग्रहोपशान्तिः | २२ | १ | ८ |
| साग्निकसूतिकायालौ-किकाग्निपक्काशन-विधानम् | २२ | २ | ८ |

| | प० | पृ० | पं० |
|---|---|---|---|
| जननाशौचेपित्रादि-शुद्धिः | २३ | १ | २ |
| महारक्षाविधानम् | २३ | १ | ६ |
| षष्ठीपूजनम् | २३ | २ | १ |
| नामकरणम् | २५ | १ | १ |
| पालकारोहः | २७ | २ | ५ |
| दुग्धपानम् | २७ | २ | ८ |
| निष्क्रमणम् | २८ | १ | ३ |
| साग्निकप्रवासगमना-गमनविधिः | २९ | १ | ३ |
| उपवेशनम् | ३१ | १ | ८ |
| अन्नप्राशनम् | ३२ | १ | ३ |
| चूडाकरणम् | ३४ | १ | ८ |
| स्त्रीचूडाकरणेविशेषः | ३९ | २ | २ |

| | प० | पृ० | पं० |
|---|---|---|---|
| कर्णवेधः | ४० | १ | १ |
| अक्षरारम्भः | ४० | २ | ६ |
| अतिक्रान्तसंस्कारविधिः | ४१ | १ | ६ |
| उपनयने कालविचारः | ४३ | १ | ३ |
| उपनयनप्रयोगः | ४४ | १ | ५ |
| उपनयनेबटोर्वैदिका | ४५ | १ | १ |

| | प० | पं० | पृ० |
|---|---|---|---|
| सावित्रीप्रदानविधिः | | | |
| तत्कालनियमश्च | ५० | १ | ७ |
| बटोरभिवादनम् | ५२ | १ | ५ |
| भिक्षाचरणप्रकारः | ५२ | २ | ४ |
| ब्रह्मचारिनियमाः | ५३ | १ | ३ |
| वेदारम्भः | ५३ | २ | ५ |
| ब्रह्मलोपप्रायश्चित्तानि | ५५ | २ | ३ |

| | प० | पृ० | पं० |
|---|---|---|---|
| केशान्तकर्म | ५६ | १ | ४ |
| ब्रह्मचारिव्रतलोपे- प्रायश्चित्तम् | ५६ | २ | ५ |
| समावर्तनम् | ५६ | २ | ७ |
| स्नातकनियमाः | ६३ | २ | ३ |
| तत्र त्रिरात्रेविशेषः | ६४ | १ | ५ |
| विवाहेकन्यावरविचारः | ६४ | २ | ५ |

| | प० | पृ० | पं० |
|---|---|---|---|
| विवाहेकालनिर्णयः | ६५ | २ | २ |
| वाग्दानविधिः | ६६ | २ | १ |
| हरिद्रारोपणम् | ६८ | २ | ३ |
| तदुपयोगिमण्डपादि- विधानम् | ६८ | २ | ६ |
| विवाहोपयोगिगणप- त्यादिपूजनम् | ६९ | १ | ६ |

| | प० | पृ० | पं० |
|---|---|---|---|
| कन्यागृहेवरगमनम् | ६९ | २ | ८ |
| कन्याद्वारे वरपूजनम् | ७० | १ | १ |
| विवाहप्रयोगः | ७० | १ | ३ |
| विवाहाग्निनाशेप्राय-श्चित्तम् | ९० | १ | ७ |
| ऐरिणीदानम् | ९० | २ | २ |

| | प० | पृ० | पं० |
|---|---|---|---|
| शिष्टाचारप्राप्तन्यूतमु-पलपुत्रकदानञ्च | ९० | २ | २ |
| चतुर्थीकर्म | ९२ | १ | ३ |
| देवकोत्थापनम् | ९४ | २ | २ |
| वधूप्रवेशः | ९५ | १ | ६ |
| मार्गेरथादिभङ्गे प्राय-श्चित्तम् | ९५ | २ | ७ |

| | प० | पृ० | पं० | | प० | पृ० | पं० |
|---|---|---|---|---|---|---|---|
| राज्ञोयानभेदेविशेषः | ९७ | २ | ४ | क्षातीयानांविशेषः | ९९ | १ | ५ |
| अर्कविवाहविधिः | ९८ | १ | १ | | | | |


॥ इति संस्कारनृसिंहस्यानुक्रमणिका समाप्ता ॥



श्रीगणेशाय नमः ॥ ॥ श्रीलक्ष्मीनृसिंहाय नमः ॥ विश्वोत्पत्तिस्थितिलयायन्मायालेशतः किल ॥ सच्चित्सुखैकरूपन्तं स्वात्मानन्नृहरिन्नुमः ॥ १ ॥ गर्भाधानादिसँस्कारनृसिंहो ऽज्ञानदैत्यहा ॥ स्फुरत्वयं सताञ्चित्ते नित्यं सत्कर्मदर्शनः ॥ २ ॥ ते च सँस्कारा द्विविधाः ब्राह्मा दैवाश्च तत्र ब्राह्मा गर्भाधानाद्याः पाकयज्ञाद्या दैवाः अत्र तु गर्भाधानाद्या अनुष्ठेयरूपेणोच्यन्ते ते च षोडश ॥ गर्भाधानम्पुंसवनं सीमन्तो जातकर्म च ॥ नामक्रियानिष्क्रमोऽन्नप्राशनम्वपनक्रिया ॥ कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः ॥ केशान्तस्स्नानमुद्वाहो विवाहाग्निपरिग्रहः ॥ त्रेताग्निसङ्ग्रहश्चैव सँस्काराः षोडश स्मृताः ॥ नवैताः

कर्णवेधान्ता मन्त्रवर्जक्रियाः स्त्रियाः ॥ विवाहो मन्त्रवत्तस्याःशूद्रस्यामन्त्रतो दश ॥ इति व्यासोक्ताः ॥ गृह्यकारिकायान्तु ॥ गर्भाधानम्पुंसवनं सीमन्तोन्नय-नन्ततः ॥ जातकर्माभिधानञ्च निष्क्रमः प्राशनङ्क्रमात् ॥ चूडोपनयनं वेदव्र-तानाञ्च चतुष्टयम् ॥ गोदानमेखलोन्मोक्षौ विवाहः षोडशक्रियाः इत्युक्ताः ॥ त्रयोदशानामाद्यानामधिकारी पिता भवेत् ॥ इतरेषान्त्रयाणां स्यादधिकारी स्वयं सुतः ॥ गर्भाधानादिसँस्कारैर्विवाहान्तैः समानताम् ॥ गच्छेत्सायुज्यता-न्विप्रो मुनीनाञ्च सलोकताम् ॥ वैदिकैः कर्मभिः पुण्यैर्निषेकाद्यैर्द्विजन्मनाम् ॥ कार्यः शरीरसँस्कारः पावनः प्रेत्यचेह चेति ॥ अत्र स ब्रह्मणा सायुज्यमाप्नो-

तीत्यादिगौतमादि वाक्यम्मूलमनुसन्धेयम् ॥ तत्रादौ गर्भाधानम्वक्तुन्तदुपयो-
गिप्रथमर्तौ निन्द्यमासादि तच्छान्तिरजस्वलाधर्माद्युच्यन्ते चैत्रज्येष्ठाषाढभा-
द्रपदकार्तिकपौषाधिकमासाः प्रतिपत्षष्ठ्यष्टमी द्वादशीरिक्ताऽमातिथयः
रविभौमशनैश्चरवाराः भरण्यार्द्राश्लेषामघापूर्वात्रयविशाखाज्येष्ठानक्षत्राणि
कृत्तिकापुनर्वस्वऽनुराधारेवत्यो मध्यमानि परिघपूर्वार्द्धंव्यतीपातवैधृतयो
योगाः भद्राकरणग्रहणसङ्क्रान्तिसन्ध्यारात्रिगण्डान्तादयः कालाः मेषसिंह-
मकरकुम्भलग्नानि ॥ श्वेतपीतनूतनभिन्नवस्त्रम् भर्तृगृहान्यगृहाः शुचयःप्रदे-
शाः ॥ प्रथमरजसि हरिद्रागन्धपुष्पताम्बूलानि रजस्वलाभिः सेव्यानि ॥ द्विती-

याादौ अञ्जनाभ्यञ्जने स्नानम्वासश्च दन्तधावनम् ॥ गन्धमाल्यन्दिवास्वापन्ता-
म्बूलं वर्जनीयकम् ॥ हस्ते मृन्मयपात्रे वा कटुतिक्ताम्लवर्ज्जितम् ॥ हविष्यम्म-
धुरञ्च लघु दिवैव भोक्तव्यम् एकान्ते कम्बलाद्यास्तृतभूमौ शेतव्यम् चतुर्थेऽह्नि
पञ्चरे कोष्णोनोदकेन स्नात्वाऽर्कभर्तृश्वशुरदर्शनङ्कर्तव्यम् भर्तृशय्याशयनम्वर्ज-
नीयम्॥ अथ पञ्चमे दिवसे तत्र भद्रादिसत्वेऽन्यस्मिन् शुभे दिने अमासङ्क्रा-
न्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेदिति गर्गवाक्यात् एवञ्जातकर्मनामक-
र्म्मापि भर्ता भार्यया सह कृतमङ्गलस्नानः कृतनित्यक्रियः ब्राह्मणैः सह शुचिदे-
शोपविष्टः आचमनत्रयप्राणायामत्रयान्ते अस्याः मम भार्यायाः निन्द्यमासादि

रजोदर्शनजनिताशुभनिवृत्तिद्वारा शुभसन्तानवृद्ध्यर्थं सग्रहां शान्तिङ्करिष्ये ॥
इति सङ्कल्प्य तदङ्गतया स्वस्तिवाचनम्मातृकापूजनम्वसोर्द्धारापूजनमायु-
ष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थङ्गणपतिपू-
जनमहङ्करिष्ये इति सङ्कल्प्य तानि कृत्वा आचार्यम्ब्रह्माणामृत्विजश्चतुरो
वृणुयात्। निन्द्यर्क्षतिथिवारेषु यदि पुष्पम्प्रदृश्यते॥ तत्र शान्तिम्प्रकुर्वीत घृ-
तदूर्वातिलाक्षतैः॥ प्रत्येकमष्टशतञ्च सावित्र्या जुहुयात्ततः ॥ स्वर्णगोभूति-
लान्दद्यात्सर्वदोषापनुत्तये इति नारदोक्तेः अग्निप्रतिष्ठाङ्ग्रहपूजाङ्कृत्वा तत्र
प्रजापतिम् इन्द्रम् अग्निं सोमम् आज्येन नवग्रहान् भुवनेशीङ्घृतदूर्वाति-

लयवैः अग्निं स्विष्टकृतं हविःशेषेण अग्निस्वायुमित्यादिप्रकृतम् इत्यन्वा-
धाय ब्रह्मवरणाद्याज्यभागान्ते यथाशक्ति नवग्रहहोमान्ते च गायत्रीमन्त्रेण
प्रत्येकङ्घृतदूर्वातिलयवैश्चतुर्भिर्द्रव्यैर्भिर्होममष्टोत्तरशतङ्कृत्वा सुवर्णगो-
भूतिलान्यथाशक्ति दद्यादित्येतावत्येव नारदोक्ता शान्तिः ॥ वशिष्ठसंहिता-
यान्तु चण्डाली पतिता समाथरजकी शूद्रादिनादिक्रमाच्छुद्धा पुष्पवती च
पञ्चमदिने हव्येषु कव्येषु च ॥ चेद्दृष्टेऽह्निनवोदकुम्भसलिलैः सन्मन्त्रितै रौ-
षधैः स्नानम्पापनुदं सपञ्चकलशैः कार्यं समृद्धैर्जनैः ॥ १ ॥ ऐशान्यतो गोमयम-
ण्डले च परिश्रितेऽग्नौ जुहुयाच्च दूर्वाम् ॥ युग्माङ्घृताक्ताञ्च समित्प्रमाणाङ्गा-

यत्रिसञ्ज्ञाष्टसहस्रसङ्ख्यम् ॥२॥ शतप्रमाणामथवाद्यहन्त्रीं शुभां यवैर्व्याहृतिभिस्तिलैश्च ॥ ततः सुरान् भूमिसुरान् पितॄंश्च सन्तर्पयेदन्नसुवर्णरत्नैरिति ॥३॥

ऋत्विग्वरणानन्तरम्वाऽग्निप्रतिष्ठाग्रहपूजानन्तरं वा कलशस्थापनविधिना पञ्चकलशस्थापनम् तत्र जलौषधिप्रक्षेपणान्तैर्देवस्यत्वेत्यादिभिरापोहिष्ठेति तिसृभिरिमम्मेत्यादिभिर्वारुणैरुद्राध्यायेन चाभिषेकोऽधिक उक्तः ततः प्रजापतिम् इन्द्रम् अग्निं सोमम् आज्येन नवग्रहान् आज्येन तिलैर्यवैः अग्निं वायुं सूर्यं प्रजापतिम् तिलैःभुवनेशीं घृतदूर्वातिलयवैरष्टोत्तरसहस्रं शतम्वा अग्निं स्विष्टकृतं हविःशेषेण अग्निं वायुमित्यादिप्राकृतमित्यन्वाधाय ब्रह्म-

वरणादि यथोक्तम् ततो होमो गायत्र्या प्रत्येकङ्घृतदूर्वाभिर्यवैस्तिलैरष्टोत्त-रसहस्त्रमष्टोत्तरशतम्वा व्याहृतिभिश्च तिलहोमस्तावान्स्वर्णगोभूतिलदानम् इत्येतावती वशिष्ठोक्ता शान्तिः॥ वाराहपुराणे तु शुभाशुभमासाद्युक्ता। अशु-भञ्चेद्रजः स्त्रीणाम्प्रथमतो हि दृश्यते॥ विधानन्तत्र कर्तव्यमरिष्टघ्नंविशेषतः॥ १॥ पञ्चमे दिवसे स्नात्वा द्वाभ्यामप्यत्रमङ्गलैः॥ उष्णैश्च वारिभिः श्रेष्ठैः पञ्चपल्ल-वसंयुतैः॥ २॥ तिलतैलेन शुद्धेन शुभकल्केन वा पुनः॥ आह्निकञ्च विधिङ्कृत्वा विधानन्तु समारभेत्॥ ३॥ शुभाचारसमायुक्तः श्रद्धया परयायुतः॥ स्थण्डि-लञ्च ततः कृत्वा स्वस्तिवाच्या द्विजोत्तमैः॥ ४॥ अग्निप्रतिष्ठापूर्वञ्च हवनन्तत्र

कारयेत् ॥ अष्टोत्तरसहस्रञ्च जुहुयात्तिलसर्पिषा ॥ ५ ॥ प्रधानम्पायसम्प्रो-
क्तं सघृतञ्च सशर्करम् ॥ आकृष्णेनेति मन्त्रेण मूर्द्धानञ्चेति वा पुनः ॥ ६ ॥ सूर्य-
सूक्तञ्जपेद्विद्वान् विष्णुसूक्तञ्चवा पुनः ॥ सूर्यपूजान्ततःकुर्यात्करवीरैः सुरक्तकैः ॥
७ ॥ धूपार्थङ्गुग्गुलन्दद्याद्दीपन्दद्यात्प्रयत्नतः ॥ वन्हेरुत्तरतो विद्वान् स्थापये-
त्कदलीं शुभाम् ॥ ८ ॥ हेम्नः पञ्चपलाढ्याञ्च पलस्यापि सुलक्षणाम् ॥ पलार्धेन
तदर्धेन तदर्द्धार्द्धेन वा पुनः ॥ ९ ॥ सुस्तम्भाम्पञ्चपत्राढ्याङ्कदलैश्च विराजि-
ताम् ॥ राशौ कृतप्रतिष्ठान्तु तण्डुलानान्नृपोत्तम ॥ १० ॥ तण्डुलानाम्परी-
माणमाढकानाञ्चतुष्टयम् ॥ दद्यात्ताम्विप्रवर्याय सवस्त्राञ्च सदक्षिणाम् ॥

११ ॥ अलङ्कृताय विदुषे श्रोत्रियाय कुटुम्बिने ॥ सुपत्रे सुभगे देवि रम्भे भास्करवल्लभे ॥ रक्ष मां रजसो दोषाद्दुष्टस्यास्य विगर्हितात् ॥ १२ ॥ दानेनानेन देवेशः सविता विश्वतोमुखः ॥ प्रीतो भवतु मे सद्यो दोषं हरतु दुष्करम् ॥ १३ ॥ आचार्य त्वम्महाभाग महादोषविनाशन ॥ दानस्यास्य प्रभावेण रजोदोषाच्च पाहि माम् ॥ १४ ॥ ततोऽभिषेचनङ्कार्यन्दम्पत्योश्च विशेषतः ॥ वेदविद्भ्यो धनन्देयं यथा शक्त्या च तर्पणम् ॥ १५ ॥ यस्मिन्वाससि तद्दृष्टं रजोदुष्टम्भयावहम् ॥ तद्वासो यत्नतस्त्याज्यन्ततः शान्तिकरम्भवेत् ॥ १६ ॥ अत्राप्यग्निप्रतिष्ठा ॥ ग्रहपूजानन्तरङ्करवीरैःसूर्यपूजानन्तरम्प्रजापतिम् इन्द्रम् अग्निं सो-

मम् एता आज्येन नवग्रहान् पायसेन सूर्यम्भौमञ्च पायसेन शेषेणाग्निं स्विष्ट-
कृतम् अग्निम् वायुमित्यादिप्राकृतपायसं श्रपयित्वाऽऽज्यभागान्ते नवग्रहान्
यथाशक्ति हुत्वा आकृष्णेनेति सूर्यमष्टोत्तरशतम्मूर्द्धानन्दिव इत्यनेन च स्विष्ट-
कृदादि प्राकृतं उक्तमन्त्रैः कदलीदानम् ततो दम्पत्योरभिषेकः वेदविद्भ्यो
दक्षिणादानम् इत्येतावत्येव वराहपुराणोक्ता शान्तिः॥ अन्यापि शौनकोक्ता॥
सार्तवानान्तु नारीणां शान्तिम्वक्ष्यामि शौनकः॥ द्रोणप्रमाणधान्येन व्रीहि-
राशित्रयम्भवेत्॥ १॥ कुम्भत्रयं न्यसेद्राशौ तन्तुवस्त्रादिवेष्टितम्॥ सूक्तेनाथ
नवर्चेन प्रसव आप इत्यथेत्यादि सा तु आश्वलायनानामेव प्राधान्येन भवति

सं. नृ.
६

याजुषैस्सूक्तशान्तित्रयेऽन्यतमां विधाय गर्भाधानङ्कार्यम् तद्यथा ऋतुदिनात्
षोडशरात्रिषु आद्यचतुर्दिनामावास्याष्टमीपौर्णिमा चतुर्दशी सन्धिसङ्क्रा-
न्तिव्यतीपातवैधृतिपरिघपूर्वार्द्धभद्राश्राद्धतत्पूर्वदिनमघामूलरेवत्यश्विनीभ-
रण्यश्लेषाश्रवणधनिष्ठानिधनजन्मताराराहितासु चन्द्रतारानुकूलासु समासु
रात्रिषु कार्यम् विषमे राशौ नवांशे च गुरुचन्द्रार्कलग्नेषु बलिष्टेषु च केन्द्रत्रि-
कोणेषु शुभेषु त्रिषडायेषु पापेषु च लग्नम्विना विषमस्थाने शनैश्चरे च कार्यम्
तत्र कर्त्ता पत्न्यासह कृतमङ्गलस्नानः तस्मिन्नुदके आदित्यङ्गर्भम्पयसा चीय-
मानः। इत्यादित्यमवेक्षते स्वलङ्कृतः कृतनित्यक्रियः शुचौदेशे आचमनप्रा-

षा.
६

णायामत्रयान्ते देशकालसङ्कीर्तनान्ते च अस्याः मम भार्यायाः प्रतिगर्भसँ-
स्कारातिशयद्वारा अस्याञ्जनिष्यमाणसर्वगर्भाणाम्बीजगर्भसमुद्भवैनोनिवर्ह-
णद्वारा श्रीपरमेश्वरप्रीत्यर्थङ्गर्भाधानाख्यङ्कर्माहङ्करिष्ये तदङ्गतया स्वस्तिवा-
चनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्च करिष्ये तत्रा-
दौ निर्विघ्नतासिद्ध्यर्थङ्गणेशपूजनमहङ्करिष्ये ॥ इति सङ्कल्प्य तानि कृत्वा
दम्पती स्निग्धमधुराहारावलङ्कृतौ दक्षिणनासावहे वायौ पूर्वोक्तलग्ने शय्या-
मधिरोहतः तत्र पतिः तस्या उभावूरू प्रसार्य्य दक्षिणेन पाणिना प्रजास्थान-
न्तूष्णीमभिमृश्य पूषाभगꣳ सविता मे ददातु रुद्रः कल्पयतु ललामꣳ विष्णु-

योनिङ्कल्पयतु त्वष्टारूपाणि पिंशतु ॥ आसिञ्चतु प्रजापतिर्द्धाता गर्भन्द-
धातु ते ॥ गर्भन्देहि सिनीवाली गर्भन्धेहि पृथुष्टुके ॥ गर्भन्ते अश्विनौ देवा-
वाधत्ताम्पुष्करस्रजौ ॥ इति जपेत् ॥ तेजो वैश्वानरो दद्यात् इति च ब्रह्मा
गर्भन्दधातु ते ॥ इति ब्रह्माऽनुमन्त्रणम् ॥ धर्माविरुद्धचुम्बनदशनाभिघात-
पुरस्सरं सानन्दन्दक्षिणकर्णस्थयज्ञोपवीतः प्राङ्मुखो मन्थेत् स्नावणङ्कु-
र्यात् शौचस्नानाचमनानि कृत्वा अथास्याः दक्षिणांसं समधिहृदयं यत्ते-
सुसीम इत्यस्य प्रजापतिऋषिः जगतीछन्दः हृदयन्देवता हृदयालम्भने
विनियोगः यत्तेसुसीमेहृदयन्दिविचन्द्रमसिश्रितं वेदाहन्तन्मान्तद्विद्यात्प्र-

पश्येमशरदः शतञ्जीवेमशरदः शतꣳ शृणुयामशरदः शतमिति मन्त्रेणालभते ततो गर्भाधानाङ्गतया विहितान्दशब्राह्मणानहम्भोजयिष्ये इति सङ्कल्प्य तान् भोजयेत् श्राद्धादि तु प्रथमर्तुगर्भाधाने हृदयालम्भनन्तु प्रत्यृतु गमने आगर्भधारणाद्गर्भाधानाकरणे प्रायश्चित्तम् ॥ गर्भाधानस्याकरणात्त-स्याज्ञातस्तु दुष्यति ॥ अकृत्वा गान्द्विजे दत्वा कुर्यात्पुंसवनम्पतिः ॥ इति गर्भाधानम् ॥ अथ पुंसवनम् ॥ तच्च गर्भचलनात्पुरा मासे द्वितीये तृतीये वा शुक्लपक्षे रिक्ताऽमा पौर्णिमा वर्जिततिथौ रविभौमगुरुवारे मृगपुनर्वसु-पुष्यहस्तमूलश्रवणनक्षत्रे मिथुनातिरिक्तविषमे लग्नेंशे च क्रूरग्रहरहितके-

न्द्रत्रिकोणे शुभग्रहे भार्यामुपवासङ्कारयित्वा ऽऽप्लाव्याहते वाससी परि-
धाप्य स्वयञ्च कृतनित्यक्रिय आचम्य देशकालकीर्तनान्ते अस्याम्मम भा-
र्यायामुत्पत्स्यमानगर्भस्य वैजिकगार्भिकदोषपरिहारपुरुषज्ञानोदयप्रतिरो-
धिपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थम् क्षेत्रसँस्काररूपम्पुंसवनाख्यङ्कर्माहङ्-
करिष्ये तदङ्गतया स्वस्तिवाचनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्र-
जपन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थङ्गणपतिपूजनमहङ्क-
रिष्ये तानि कृत्वा तृतीये मासे पुंसवनम् ॥ न्यग्रोधस्यावरोहाणां शुङ्गाना-
मेव पेषणम् ॥ विकृत्याभिमन्त्रणमेतान्वैकल्पिकपदार्थानहङ्करिष्ये ॥ हिरण्य-

गर्भं अद्भ्यः सम्भृत इत्यनयोः क्रमेण प्रजापत्युत्तरनारायणौ ऋषी त्रिष्टुप्
छन्दः प्रजापतिपुरुषौ देवते आसेके विनियोगः सुपर्णोसीति. प्रजापति० आ-
कृती० गरुत्मान्देवता अभिमन्त्रणे० इत्यृष्यादि स्मृत्वा वटस्यावरोहान् अधो-
भागाङ्कुरान् शुङ्गानूर्ध्वाङ्कुरांश्च निशायामुदपेषम्पिष्ट्वा उदकं यथा भ-
वति तथा पिष्ट्वा सूक्ष्मवस्त्रेण पीडितम्भार्याया दक्षिणस्यान्नासिकायाम्पतिः
हिरण्यगर्भ० हविषाविधेम १ अद्भ्यः सम्भृत० मग्रे २ इतिमन्त्राभ्यामासि-
ञ्चति स यदि कामयेत वीर्यवान्स्यादयङ्गर्भस्तदा तस्या अङ्के उदपूर्णं शराव-
न्निधाय गर्भं सुपर्णोसि० स्वः पत १ अनेनाभिमन्त्रयते ततः पुंसवनाङ्गतया

विहितान्दशब्राह्मणान् भोजयिष्ये इति तान् भोजयेत् ॥ एतदेव पुरागर्भच-
लनादकृतं यदि ॥ सीमन्तात्प्राग्विधातव्यं स्पन्दितेऽपि वृहस्पतिरिति कारि-
कोक्तेः सीमन्तोन्नयनात्प्रागेतस्यानादिष्टम्विनैव करणम् इदं सीमन्तोन्नयनञ्च
गर्भसँस्कारस्तेन प्रतिगर्भङ्कर्तव्य इति विष्णुकर्कौ स्त्रीसंस्कारा एवैते तेन प्रति
गर्भन्नावृत्तिरिति हारीतदेवलौ पुंसवनन्तु दृष्टार्थत्वात्प्रतिगर्भमिति भाष्य-
कारः ॥ इति पुंसवनम् ॥ अथ सीमन्तोन्नयनम् ॥ तच्च षष्ठे वाप्यष्टमे
मासि पुंसवनोक्ते मुहूर्त्ते बहिः शालायाम्पत्न्या सह कृतमङ्गलस्नानः परिहि-
ताहतवस्त्रः स्वलङ्कृतस्स्वासने उपविश्याचम्य प्राणानायम्य देशकालौ स-

ङ्कीर्त्यास्याः मम भार्यायाः गर्भावयवाभिवृद्ध्यर्थं सीमन्तोन्नयनङ्कर्तुम् तद-
ङ्गतया विहितं स्वस्तिवाचनमविघ्नपूजनम्मण्डपदेवतापूजनम्मातृकापूज-
नम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नता-
सिद्ध्यर्थङ्गणेशपूजनमहङ्करिष्ये इति सङ्कल्पङ्कृत्वा हस्तमात्रे कुण्डे स्थण्डिले
वा कुशैः परिसमुह्य गोमयेनोपलिप्य स्फ्येनोल्लिख्यानामिकाङ्गुष्ठाभ्यामुद्धृत्या-
द्भिरभ्युक्ष्येति पञ्चभूसंस्कारान्कृत्वा स्त्रीसंस्कारपक्षे आवसथ्याग्निङ्गर्भसंस्का-
रपक्षे लौकिकाग्निं संस्थाप्य अग्नेः पश्चादुपविष्टस्स्वदक्षिणोपविष्टपत्नीकः
आचम्य अस्याः मम भार्यायाः तनुरुधिरप्रिया लक्ष्मीभूतराक्षसीगणादू-

रनिरसनक्षमसकलसौभाग्यादि निदानभूतमहालक्ष्मी समावेशनद्वारा प्रति-
गर्भम्बीजगर्भसमुद्भवैनोनिवर्हणजनकातिशयद्वारा परमेश्वरप्रीत्यर्थं स्त्री
संस्काररूपं सीमन्तोन्नयनाख्यङ्कर्माहङ्करिष्ये तत्रपूर्वेण ब्रह्मणो गमनमपरेण
पात्रासादनम् द्वे पवित्रे ताम्रमय्याज्यस्थाली ताम्रमयी चरुस्थाली पाला-
श्यस्समिधः प्राञ्चावाघारौ समिद्धतमे आज्यभागौ पूर्णपात्रन्दक्षिणा
प्रतिमहाव्याहृतिविनयनन्नियुक्तगाथागानम् एतान्वैकल्पिकपदार्थानहङ्क-
रिष्ये अथर्ष्यादि भूर्भुवस्वरितिमहाव्याहृतीनाम्प्रजापतिर्ऋषिः क्रमेण गाय-
त्र्युष्णिगनुष्टुप्छन्दांसि अग्निवायुसूर्यादेवताः गार्हपत्याहवनीयाधाने

विनियोगः त्वन्नोऽग्ने सत्वन्नोऽग्नऽअयाश्चाग्ने येतेशतमितिमन्त्राणाम्वा-
मदेवऋषिःत्रिष्टुप् छन्दःअग्नीवरुणौ देवते प्रथमयोस्सौत्रामण्यवभृथे विनि-
योगः तृतीयस्याग्निर्दैवता चतुर्थस्य वरुणस्सविताविष्णुर्विश्वेदेवामरुतस्स्व-
र्कादेवताः अनादिष्टहोमे विनियोगः उदुत्तममित्यस्य शुनश्शेपऋषिः
त्रिष्टुप्छन्दः वरुणोदेवता पाशोन्मोके विनियोगः भूर्भुवःस्वरिति व्याहृतीनां
प्रजापतिऋषिः क्रमेण गायत्र्यांछन्दांसि अग्निर्वांअत्रविनयने विनियोगः अ-
यमूर्जेत्यस्य प्रजापतिऋषिः बृहतीछन्दः फलिनीदेवता वेणीबन्धने विनियोगः
सोम एवेत्यस्य प्रजापतिऋषिः गायत्रीछन्दः सोमोदेवता गाथागाने विनि-

योगः ॥ अथ देवताभिधानम् ॥ तत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् एता आज्येन प्रजापतिञ्चरुणा शेषेणाग्निं स्विष्टकृतम् अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुंविश्वान्देवान्मरुतस्स्वर्कान् वरुणम् प्रजापतिम् एताः पुनराज्येनैतादेवता अङ्गप्रधानार्था अस्मिन्कर्मण्य-हं यक्ष्ये अग्नेरुदक्प्राङ्मुखम्ब्रह्माणं अस्मिन्कर्मणि त्वम्ब्रह्माभवेति ब्रह्मवरणम्भवामीति प्रतिवचनम् पूर्वेणाग्नेरागत्य दक्षिणत अग्न्यभिमुखमुपवेशनम् अग्नेर्वायव्ये उत्तरतश्च कुशस्थापनञ्चमसन्दक्षिणेन वामे निधायोदकेनापूर्य वायव्ये निधायालभ्योत्तरतः स्थापनम् प्रागाद्यग्नेः परिस्तरणन्निधायोदकेना-

पूर्य वायव्ये निधायालभ्योत्तरतस्थापनम् प्रागाद्यग्नेः परिस्तरणम् ॥ उत्तरतः पश्चिमतो वा पात्रासादनम् पवित्रच्छेदनानि त्रीणि साग्रे पवित्रे द्वे प्रोक्षणीपात्रम् ताम्रमय्याज्यस्थाली चरुस्थाली च सम्मार्गकुशास्त्रयः उपयमनकुशाश्च तिस्रः पालाश्यः समिधः स्रुवः आज्यम् त्रिःप्रक्षालितास्तण्डुलाः तथा तिला मुद्गाश्च पूर्णपात्रञ्चेति ॥ अथोपकल्पनीयानि मृदुपीठम् युग्मौदुम्बरफलयुक्तौदुम्बरीसमित् त्रीणि दर्भपिञ्जुलानि त्रेणी शलली बैल्वः अश्वत्थो वा शङ्कुः शरेषीको वा शङ्कुः पूर्णपात्रम् वीणागाथिनौ चेति ततः प्रादेशमात्रयोः प्रागग्रयोर्द्वयोरुदगग्रङ्कुशत्रयन्निधाय द्विमूलेन

द्धप्रदक्षिणम्वेष्टयित्वा सर्वान्दक्षिणे धृत्वा वामाङ्गुलिभिश्छित्वा दक्षिण-
स्थानामुदङ्निरसनम् प्रणीतोत्तरतः प्रोक्षणीर्निधाय तत्र प्राणीतज्जलन्त्रि-
र्निक्षिप्य पवित्राभ्यामुत्पूय ते तत्र निधाय प्रोक्षणीर्दक्षिणेन वामे कृत्वा द
क्षिणेनोद्धिङ्गनम् प्राणीतेन प्रोक्षणम् ततस्तज्जलेनाज्यस्थाल्याः प्रोक्षणम् च-
रुस्थाल्याः प्रोक्षणम् सम्मार्गकुशानाम्प्रोक्षणम् उपयमनकुशानाम्प्रो० समि-
धाम्प्रो० स्रुवस्य प्रो० आज्यस्य प्रो० तण्डुलानाम्प्रो० तिलानाम्प्रो० मुद्गानाम्प्रो०
पूर्णपात्रस्य प्रो० प्रणीताग्न्योर्मध्ये प्रोक्षणीर्निधाय आज्यस्थाल्यां स्वात्मा-
भिमुखमाज्यनिर्वापः चरुस्थाल्यां पवित्रे निधाय प्राणीतज्जलन्त्रिर्निक्षिप्य

मुद्गप्रक्षेपः ब्रह्मणा दक्षिणत आज्याधिश्रयणम् यजमानेनोत्तरतश्चर्वधिश्रय-
णञ्च युगपत् उल्मुकेनेशानीतः उभयोः पर्यग्निकरणम् उदकोपस्पर्शनम्
अर्द्धशृते चरौ तण्डुलतिलप्रक्षेपो युगपत् शृते चरौ दक्षिणेनाधोमुखं स्रुव-
म्प्रतप्योदकस्पर्शनम् वामे उत्तानबिलं सम्मार्गकुशानामग्रैर्मूलादग्रान्तम्मू-
लैरधस्तादग्रान्मूलान्तं सम्मृज्य सम्मार्गाग्निरस्य प्रणीतेनाभ्युक्ष्य पुनःप्रतप्य
उदकस्पर्शनम् स्वदक्षिणे निधानम् आज्यमुद्वास्य चरोः पूर्वेणानीय अग्नेरु-
दक् संस्थाप्य चरुमुद्वास्य आज्यस्य पश्चादानीय आज्योत्तरतो निधाय अग्नेः
पश्चादाज्यन्निधाय तदुत्तरतश्चरुनिधानम् पवित्राभ्यामाज्यमुत्पूयावेक्ष्याप-

द्रव्यन्निरस्य प्रोक्षणीरुत्पूय पवित्रे तत्र निधायोपयमनकुशानादाय सव्ये
कृत्वा दक्षिणेनाग्नौ प्रागग्रौंस्तिष्ठन्समिधोऽभ्यादाय दक्षिणेन सपवित्राशेष-
प्रोक्षणीजलेनेशानीत अग्नेः पर्युक्षणम् इतरथावृत्तिः प्रणीतासु पवित्रनि-
धानम् सोपयमनकुशं सव्यहस्तं हृदये निधाय शङ्खमुद्रया घृतेन स्रुवेण
जुहुयात् त्यागान्ते प्रक्षेपः तत्राग्नेरुत्तरभागे ऋजुम् दीर्घम् प्राञ्चम् सन्त-
तम् मनसैव ब्रह्मणाऽन्वारब्धः ओम्प्रजापतये स्वाहा इदम्प्रजापतये नमम
पात्रान्तरे संस्रवप्रक्षेपः तद्दक्षिणभागे तथैव ओं इन्द्राय स्वाहा इदमिन्द्राय
नमम एतावाघारौ समिद्धतमे आज्यभागौ तौच ॐ अग्नये स्वाहा इदम-

ग्नये० ॐ सोमाय स्वाहा इदं सोमाय० ततश्चरुमभिघार्य स्रुवेणादाय अनन्वारब्धः ओम्प्रजापतये स्वाहा इदम्प्रजापतये० पुनरन्वारब्धश्चरोरुत्त-राद्धात् ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते नमम ॥ अथा-ज्येन ॐ भूः स्वाहा इदमग्नये० ॐ भुवः स्वाहा इदं वायवे० ॐ स्वः स्वाहा इदं सूर्याय० ॐ त्वन्नो अग्ने० मुमुग्ध्यस्मत् स्वाहा इदमग्नीवरु-णाभ्यान्न० ॐ सत्वन्नो अग्नेवमो० एधि स्वाहा इदमग्नीवरुणाभ्याम्० ॐ अयाश्चाग्ने० भेषजꣳ स्वाहा इदमग्नये० ॐ येतेशतम्० स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च नमम ॥

उदुत्तमम्० अदितये स्याम स्वाहा इदम्वरुणाय० ओम्प्रजापतये स्वाहा इदम्प्रजापतये० ततः संस्रवप्राशनम् पवित्राभ्याम्मार्जनम् पवित्रप्रतिपत्तिः ब्रह्मणे पूर्णपात्रदानम् ॥ ब्रह्मन्नस्य सीमन्तकर्मणो ऽङ्गतया विहितमिदम्पूर्णपात्रन्तुभ्यमहं सम्प्रददे ॥ ब्रह्मा द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु इति प्रतिगृह्णीयात् प्रणीताविमोकः ततः पश्चादग्नेर्भद्रपीठ उपविष्टायाम्भार्यायां पतिः उपकल्पितयुग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जुलैस्त्रेण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण चेत्येतैः फलीकृतैस्सीमन्तमूर्द्धम् भूर्विनयामि भुवर्विनयामि स्वर्विनयामि इति प्रतिमन्त्रम्

विनयति ततो वेण्याम् अयमूर्ज्जावतो वृक्ष ऊर्जीवफलिनी भव इति बध्नाति ततो वीणागाथिनौ सोमं राजानं सङ्गायेतामिति प्रेषयति ॥ तौ च सोम एव नो राजेमामानुषीः प्रजाः। अविमुक्तचक्रऽआसीरंस्तीरेतुभ्यमसौ इति गायतः असौ स्थाने समीपवर्तिन्याः नद्याः हेगङ्गे यमुने इत्यादि नामग्रहणम् गर्भिणी च यान्नदीमुपावसिता भवति तस्या नाम गृह्णाति गङ्गेत्यादि प्रथमान्तम् ततस्सीमन्तोन्नयनाङ्गतया विहितमेकस्मै ब्राह्मणाय भोजनं सम्प्रदास्ये ततस्स्मृत्युक्तदशसङ्ख्याकेभ्यो ब्राह्मणेभ्यो भोजनं सम्प्रदास्ये इति च सङ्कल्प्य एकादशब्राह्मणान् भोजयेत् ततः पतिपुत्रवतीभिर्वृद्धाभिर्यथा

कुलाचारम्मङ्गलङ्कुर्यात् इदं स्वकाले न कृतञ्चेत्प्रसवपर्यन्तङ्कार्यम् तत्रापि न कृतञ्चेत्पुत्रन्तस्या अङ्के दत्वा कर्तव्यम् तदुक्तङ्कारिकायाम् ॥ सीमन्तोन्नयनम्मुख्यकाले न स्यात्कथञ्चन । कार्यमाप्रसवादेतदिति शङ्खो ऽब्रवीत्स्फुटमिति ॥ सत्यव्रतश्च स्त्रीयद्यकृतसीमन्तात्प्रसूयेत कथञ्चन । पुत्रङ्गृहीत्वा विधिवत्पुनस्संस्कारमर्हति इति ॥ अथ गर्भिणीधर्माः कारिकायाम् ॥ अङ्गारभस्मास्थिकपालचुल्ली शूर्पादिकेषूपविशेन्न नारी । सोलूखलाद्ये दृषदादिके वा यन्त्रे तुषाढ्ये न तथोपविष्टा ॥ नो मार्जनी गोमयपिण्डकादौ कुर्यान्न वारिण्यवमज्जनं सा । अङ्गारभूत्या न नखैर्लिखेत्क्ष्माङ्कलिस्व-

पुर्भङ्गमथो न कुर्यात् ॥ नो मुक्तकेशी विवशाथ वा स्याद् भुङ्क्ते न सन्ध्यावसरे न शेते । स्वप्यान्न याम्याचरणार्द्रपादा नाधः शिरोद्विग्नमना शुचिः स्यात् ॥ नामङ्गलम्वाक्यमुदीरयेत्सा शून्यालयम्वृक्षतलन्न यायात् । तिष्ठेन्न वल्मीकमथो न हिंस्याद्व्रतान्विता भर्तृहिते रता स्यात् ॥ तिष्ठेत्सुभूषादि-गुणैश्च युक्ता पुत्रम्प्रसूयाद्गुणशीलयुक्तम् । पाद्मेदितेः कश्यप आह धर्म-म्मात्स्येऽपि जातः सुरगर्भिणीनाम् ॥ तथा कश्यपः ॥ गर्भिणी कुञ्जरा-श्वादिशैलहर्म्यादिरोहणम् । व्यायामं शीघ्रगमनं शकटारोहणन्त्यजेत् ॥ शोकं रक्तविमोक्षञ्च साध्वसङ् कुक्कुटासनम् । व्यवसायन्दिवा स्वापं रात्रौ

जागरणान्त्यजेत् इति ॥ अथ गर्भिणीपतिधर्म्माः ॥ याज्ञवल्क्यः ॥ दौहृदस्या प्रदानेन गर्भो दोषमवाप्नुयात् । वैरूप्यम्मरणञ्चापि तस्मात्कार्यम्प्रियं स्त्रियः ॥ आश्वलायनः ॥ वपनम्मैथुनन्तीर्थम्वर्जयेद्गुर्विणीपतिः । श्राद्धञ्च सप्तमान्मासादूर्द्ध्वान्यत्र वेदविदिति ॥ अन्यत्रापि उदन्वतोऽम्भसि स्नानन्नखकेशादिकर्त्तनम् । अन्तर्वत्न्याः पतिः कुर्वन्न प्रजा जायते ध्रुवमिति ॥ इति सप्तर्ष्युपाख्याने नरहरिभट्टविरचिते संस्कारनृसिंहे सीमन्तोन्नयनं समाप्तम् ॥ अथ जातकर्म वक्तव्यम् तत्रादौ सूत्रकारोक्तम् ॥ सोष्यन्त्यभ्युक्षणम् अवरावपतनञ्चोच्यते ॥ सोष्यन्तीम्प्रसवशूलवतीम्पतिः अद्भिः रजतु दर्भा-

मास्य इत्यस्य प्रजापतिर्ऋषिः महापङ्क्तिश्छन्दः गर्भो देवता अभ्युक्षणे विनियोगः ॥ एजतु दशमास्यो० सह यथायं० एजति एवायन्द० सह इत्यभ्युक्षति ॥ अथावरावपतनम् ॥ अवरो जरायुविशेषः तस्य अव अधः पतनम्पतनहेतुम्मन्त्रञ्जपति ॥ अवैतु पृश्नीत्यस्य प्रजा० बृहती० अग्निर्देवता अवपतने विनियोगः ॥ अवैतु पृश्निशेवलꣳ शुने जराय्वत्तवे नैव माꣳसेनपीवरिनकस्मिंश्च नायतनमवजरायुपद्यताम् इति जपति ॥ अथ जातकर्म ॥ जातस्य कुमारस्याच्छिन्नायान्नाड्याम्पिता पुत्रस्य मुखन्निरीक्ष्य नद्यादौ स्नात्वा असम्भवे दिवा हृताभिः शीताभिरद्भिः सुवर्णयुताभिः

सचैलं स्नात्वा ऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ममास्य कुमारस्य जातकर्म कर्तुम् तदङ्गतया विहितं स्वस्तिपुण्याहवाचनम्मातृकापूजनं वसोर्द्धारापूजनम् आयुष्यमन्त्रजपम् आमद्रव्येण नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतार्थङ्गणपतिपूजनमहङ्करिष्ये इति सङ्कल्प्य कृत्वा पुनर्ममास्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिवर्हणायुर्मेधावृद्धिबीजगर्भसमुद्भ-वैनोनिवर्हणद्वारा जातकर्म करिष्ये तत्र घृतप्राशनम् दक्षिणकर्णसमीपे जपः वात्सप्रेणाभिमर्शः स्वयमनुप्राणनम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये ततो भूस्त्वयीत्यादीनाम्प्रजापति० गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्निवायु-

सूर्या देवताः प्राशने विनियोगः अग्निरायुष्मानित्यादीनां सर्वेषां प्रजा०
गायत्री० लिङ्गोक्ता देवता आयुष्यकरणे विनियोगः आयुषमित्यस्य
नारायण० उष्णिक्छ० शिवो० आयुष्यकरणे विनियोगः दिवस्परीत्याद्ये-
कादशानां वात्सप्रीभालन्दन० त्रिष्टुप्छन्दः अग्निर्देवता अभिमर्षणे विनि-
योगः वेद त इत्यस्य प्रजा० अनु० भूमिर्दे० भूम्याभिमन्त्रणे विनियोगः
अश्मा भवेत्यस्य प्रजा० अनु० लिङ्गोक्ता० अभिमर्शने० इडासीत्यस्य प्रजा०
अनु० इडा दे० मात्रभिमन्त्रणे वि० इमꣳ स्तनमित्यस्य प्रजा० त्रिष्टु०
अग्नि० स्तनदाने० यस्ते स्तन इत्यस्य दीर्घतमा० त्रिष्टु० वाग्देवता स्तन-

दाने० आपो देवेष्वित्यस्य प्रजा० अनु० आपो० जलपात्रधारणे० प्राण्डा-
मर्का इति द्वयोः प्रजा० अनु० लिङ्गोक्ता० आवपने० इत्यार्षादि स्मृत्वा
ततस्तैजसपात्रे घृतमादाय अनामिकया सुवर्णान्तर्हितया ॐ भूस्त्वयि
दधामि ॐ भुवस्त्वयि दधामि ॐ स्वस्त्वयि द० ॐ भूर्भुवः स्वः सर्वन्त्व-
यि० इति कुमारं सकृत्प्राशयति एतस्य मेधाजननमिति नामधेयम् इदन्ना-
लछेदनात्प्राङ्न कृतञ्चेत्कालान्तरे न भवत्येव तस्मात्कुमारञ्जातङ्घृतस्यैवाग्रे
प्रतिलेहयन्ति स्तनम्वा ऽनुपधापयन्तीति श्रुतेः ॥ अथायुष्यकरणम् ॥
कुमारस्य नाभ्यान्दक्षिणे वा कर्णे कर्णसमीपे इत्यर्थः ॥ अग्निरायुष्मान्स्तव-

नस्पतिभिरायुष्माँस्तेन त्वाऽऽयुषा ऽऽयुष्मन्तङ्करोमि सोम आयुष्मान्स ओष-
धीभिरायुष्माँस्तेन त्वाऽऽयुषा ऽऽयुष्मन्तङ्करोमि ब्रह्मायुष्मत्त ब्राह्मणैरायु-
ष्मत्तेन त्वाऽऽयुषा युष्मन्तङ्करोमि देवा आयुष्मन्तस्ते ऽमृतेनायुष्मन्तस्तेन
त्वा० ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वा० पितर आयुष्मन्तस्ते
स्वधाभिरायुष्मन्तस्तेन त्वा० यज्ञ आयुष्मान्सदक्षिणाभिरायुष्माँस्तेन त्वा०
समुद्र आयुष्मान्सस्रवन्तीभिरायुष्माँस्तेन त्वा० । इत्यष्टौ मन्त्राञ्जपति
त्रिवारम् ततस्त्र्यायुषम्० अस्तु त्र्यायुषम् इति च त्रिर्जपति इत्येतदायुष्य-
करणम् ॥ स पिता यदि कामयेत सर्वमायुरियादिति तर्हि वात्सप्रेणैन-

मभिमृशेत् यथा दिवस्परि० १ विद्माते० २ समुद्रे त्वा० ३ अक्रन्द० ४ श्रीणामुदारो० ५ विश्वस्य० ६ उशिक् पावको० ७ दृशानो रुक्म० ८ यस्ते ऽअद्य० ९ आतम्भज० १० त्वामग्ने० ११ ॥ इत्येकादशभिः कुमारमभिमृशेत्सर्वशरीरे इदमभिमर्शनङ्काम्यम् अथ प्रागादि प्रतिदिशम् नैर्ऋत्याञ्चेति पञ्च ब्राह्मणान् कुमाराभिमुखानवस्थाप्य तान् इममनुप्राणित इति पिता ब्रूयात् ॥ पूर्वः प्राण इति ब्रूयात् दक्षिणो व्यान इति अपरः अपान इति उत्तरः उदान इति नैर्ऋत्यां स्थित उपरिष्टादवेक्षमाणः पञ्चमः समान इति ब्रूयात् अविद्यमानेषु स्वयमेव तान्तान्दिशमनुपरिक्रामन् इममनु-

प्राणितेति प्रैषवर्जम् अनुप्राणनङ् कुर्यात् ॥ स कुमारो यस्मिन्देशे जातो भवति तन्देशम् वेद ते भूमिहृदयन्दिवि चन्द्रमसि श्रितम् । वेदाहन्तन्मा-न्तद्विद्यात्पश्येम शरदः शतञ्जीवेम शरदः शत ठं शृणुयाम शरदः शतम् ॥ इत्यभिमन्त्रयते ॥ अथैनङ् कुमारम् अश्मा भव परशुर्भव हिरण्यमस्तुत-म्भव । आत्मावै पुत्रनामासि सजीव शरदः शतम् । इत्यभिमृशति मूर्ध्नीति कारिकाकारः हृदीति जयरामः सर्वशरीरे इति हरिहरः युक्तञ्चैतत् इद-ञ्जातकर्म दैवान्मानुषाद्वा प्रतिबन्धादतीतकालञ्चेत् तदाऽयुष्याद्यश्मा भवेति मन्त्रान्तम्भवत्येव वात्सप्राद्येतदन्तमित्यपरे युक्तन्तु आयुष्यावे-

तदन्तम् तस्मात्कुमारञ्जातमित्यादि प्राग् लिखितश्रुतिबलात् अथास्य मातरम्प्राङ्मुखीम्प्राञ्जलिरभिमुखः । इडासि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं वीरवती भव या ऽस्मान्वीरवतोऽकरदित्यभिमन्त्रयते मन्त्रश्रावणेन संस्करोति अथास्यै अस्याः दक्षिणꣳ स्तनम्पिता स्वयम्प्रक्षाल्य कुमाराय इमꣳ स्तन० मध्ये उत्सञ्जुषस्व० सदनमाविशस्व १ इति प्रयच्छति ततो वामं स्तनम्प्रक्षाल्य आदौ यस्ते स्तनः पश्चादिमꣳस्तनमित्येताभ्यामिति हरिहरकारिकाकारगङ्गाधराः जयरामस्तु इमꣳस्तनम् १ यस्ते स्तनः शशयो० धातवेकः २ इत्येताभ्याम्मन्त्राभ्याम्प्रयच्छति युक्तञ्चैतत्

इदङ्कालान्तरे न भवति ततः अत्र दद्यात्सुवर्णम्वा भूमिङ्गान्तुरगन्तथा ।
छत्रञ्छागम्वस्त्रमाल्यं शयनञ्चासनङ् गृहम् ॥ १ ॥ धान्यङ् गुडन्तिलान्सर्पि-
रन्यद्वाऽस्ति गृहे वसु । आयान्ति पितरो देवा जाते पुत्रे गृहम्प्रति ॥ २ ॥
तस्मात्पुण्यतमम्प्रोक्तम्भारते चादिपर्वणि ॥ तत अष्टाङ्गुलम्परित्यज्य
नालञ्छिन्द्यात्क्षुरादिना ॥ अथ सूतिकायाः शिरः प्रदेशे खट्वाऽधस्ताद्भूमौ
उदपात्रम् आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ एवमस्याꣳ सूतिकायाꣳ
सपुत्रिकायाञ्जाग्रथ इति निदधाति तत्पात्रन्दशाहन्तिष्ठति ततः प्रत्यहमा-
उत्थानादुत्थानपर्यन्तम् सन्ध्ययोरुभयोर्द्वे द्वे नित्यहोमादनन्तरम् ओत्या-

नादन्वहङ्कार्यं सन्ध्ययोः स्थापनादिकम् इति कारिका द्वारदेशे परिसमू-
हनादिपञ्चभूसंस्कारान्कृत्वा सूतिकाग्निमुपसमाधाय फलीकरणैस्तण्डुल-
कणैर्मिश्रान्सर्षपान्तस्मिन्नग्नावावपति आवपनोपदेशान्नान्यत्रेति कर्तव्यता
यथा शण्डामर्का उपवीरः शौण्डिकेय ऽउलूखलः । मलिम्लुचोद्रोणास-
श्च्यवनो नश्यतादितः स्वाहा इदमग्नये नमम आलिखन्न निमिषः
किंस्वदन्त उपश्रुतिः हर्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्ष-
पारुणश्च्यवनो नश्यतादितः स्वाहा इदमग्नये नमम एवम्प्रत्यहन्दशाम-
दिनमभिव्याप्य सन्ध्याद्वये ऽग्निस्थापनाद्येतदन्तङ्कर्तव्यम् इदमपि का-

लान्तरे न भवत्येव नियतकालत्वात् तथा च वृद्धसम्मतिः अनुप्राणनवा
त्सप्राभिमर्शनानुमन्त्रणो कालान्तरेऽपि कुर्वीत आयुष्यकरणन्तथेति ।
ततः कृतैतज्जातकर्माङ्गतया विहितदशानाम्ब्राह्मणानाम्भोजनमाशौचान्ते
सम्प्रदास्ये इति सङ्कल्प्याशौचान्ते देयम् जन्मलग्ने ऽरिष्टकारकग्रहसत्वे
तद्दानमपि नालच्छेदनात्प्रागेव दत्त्वा नालच्छेदनङ्कार्यम् इदञ्जातकर्म
जन्माशौचेऽपि कार्यम् पितुरसन्निधाने ऽन्येन सन्निहितकुलवृद्धेन कार्यम्
अतीतकालञ्चेत् अश्विनीरोहिणीमृगपुनर्वसुपुष्योत्तरात्रयहस्तचित्रास्वात्य-
नुराधाश्रवणधनिष्ठाशततारारेवतीषु शुभे वारे तिथौ च कार्यम् यदि

कुमारग्रह उपद्रवेत्तदा पिता बालञ्जालेनोत्तरीयेण वा प्रच्छाद्याङ्क आधाय जपति कूर्कुर इत्यादित्रयाणाम् प्रजा० अनुष्टुप्० शुनको० जपे विनियोगः कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरोलपेतापह्वर ॥ १ ॥ तत्सत्यम् यत्ते देवावरमददुः स त्वं कुमारमेव वा वृणीथाः। चेच्चेच्छु० पह्वर ॥ २ ॥ तत्सत्यम् यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ चेच्चेच्छु० ॥ ३ ॥ इति अथ कुमारन्न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसि इति अभिमृशति सर्वशरीरे अत्र साग्निकास्त्रियाऽपि सूतिकया लौकिकाग्निपक्क-

मेव पर्वण्यपि भोक्तव्यम् सूतिसम्बन्धिपक्वादि कर्म तल्लौकिकेऽनले । पर्व-
ण्यपि च तत्पक्वमश्नीयान्नैव दोषभाक् इति जातकर्म ॥ अथ षष्ठे दिवसे
षष्ठ्यादिपूजादौ पित्रादेस्तात्कालिकी शुद्धिर्व्यासेनोक्ता ॥ सूतिका वास-
निलया जन्मदानामदेवताः । तासां यागनिमित्तन्तु शुद्धिर्जन्मनि कीर्ति-
ता ॥ प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वेतेषु न कुर्वीत सूतक-
म्पुत्रजन्मनि इति कारिकायान्तु महारक्षा विधातव्या पञ्चमे दशमेऽहनि ।
पूज्यस्तत्र गणाध्यक्षो गन्धाद्यैर्जातहारिणीत्युक्त्वा सूतिका वासनिलयेत्याद्यु-
क्तम् अतः पञ्चमे दिवसे गणाध्यक्षजातहारिणीजन्मदाख्यदेवतानाम्पू-

जनम् षष्ठे तु षष्ठीपूजनङ्कार्यम् तत्र पञ्चमे दिने पूर्वरात्रौ पित्रादिर्द्धिरा-
चम्य त्रिः प्राणानायम्य देशकालौ सङ्कीर्त्य अस्य शिशोरायुरारोग्या-
भिवृद्धिसकलानिष्टनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थङ्गणाध्यक्षजातहारिणी-
जन्मदाख्यदेवतानां यथाशक्ति मिलितोपचारैः पूजनमहङ्करिष्ये इति
सङ्कल्प्य क्रमेण चन्दनादिना कुड्यलिखित प्रतिमासु पीठादावक्षतपुञ्जेषु
वा गणाध्यक्षं जातहारिणीम् जन्मदाञ्च ॥ ॐ गणाध्यक्षाय नमः । ॐ जातहा-
रिण्यै० ॐ जन्मदायै० इति नाममन्त्रेण पृथक् पृथक् षोडशोपचारैः सम्पू-
जयेत् ततो जननी जन्मसौख्यानां वर्द्धनी धनसम्पदाम् । साधनी सर्वसि-

द्धीनां जन्मदे त्वान्नता वयम् ॥ १ ॥ इति जन्मदान्नत्वा अन्नादिबलिश्च देयः । सूतिकागृहम् परितश्शस्त्रदीपमुसलोदकविभूतिसर्षपयुतं विधेयम् एकस्मिन्खड्गे राकाम् अनुमतीम् सिनीवालीम् कुहूम् इति चतस्रः कन्याः पञ्चमीं वातघ्नीञ्च सम्पूज्य बहिरागत्य द्वारस्योभयपार्श्वयोः द्वे द्वे मातृके विलिख्य क्रमेण ॐ धिषणायै नमः ॐ वृद्धिमात्रे नमः ॐ गौर्यै नमः ॐ पूतनायै नमः इति नाममन्त्रेण सम्पूज्य ॥ धिषणा वृद्धिमाता च तथा गौरी च पूतना । आयुर्दात्र्यो भवन्त्येता अद्य जन्मदिने मम । इति प्रार्थयेत् ॥ ब्राह्मणांश्च गन्धताम्बूलदक्षिणाभिः पूजयेत् शस्त्रहस्तैः पुरुषैर्मङ्ग-

लगीतगायद्भिः स्त्रीभिश्च जागरणङ्कर्तव्यम् अतः प्रभृति प्रत्यहमेता देवताः पूजनीयाः दशम्यां रात्रौ विसर्जयेत् षष्ठ्यां रात्रौ तु द्विराचम्य त्रिः प्राणाना-यम्य देशकालौ सङ्कीर्त्य ममास्य कुमारस्यायुरारोग्याभिवृद्धिसर्वानिष्ट-निवृत्तिद्वारा श्री परमेश्वरप्रीत्यर्थं षष्ठीदेव्याः पूजनमहङ्करिष्ये इति सङ्कल्प्य ॐ षष्ठीदेव्यै नमः इति नाममन्त्रेण सम्पूज्य पीठादावक्षतपुञ्जे वा। ततः प्रार्थना ॥ गौरीपुत्रो यथा स्कन्दः शिशुत्वे रक्षितः पुरा । तथा ममाप्ययम्बालः षष्ठिके रक्षतान्नमः ॥ षष्ठीदेवि नमस्तुभ्यं सूतिकागृहशा-लिनी । पूजिता परया भक्त्या दीर्घमायुः प्रयच्छ मे । एवम्प्रार्थयेत् ॥ इति

षष्ठीपूजनम् ॥ * ॥ अथ नामकरणम् ॥ तच्च दशरात्रे व्युष्टे नामकरणमिति गोभिलसूत्रात् ॥ अहन्येकादशे नामेति याज्ञवल्क्यस्मृतेः ॥ दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोतीति गृह्यसूत्रात् एकादशेऽह्नि ब्राह्मणेन कर्तव्यम् तत्र भद्रावैधृत्यमावास्यादि कालाशुद्धौ द्वादशे ऽष्टादशे पूर्णे मासे शतरात्रे वर्षे वा कार्यम् क्षत्रादिस्तु स्वस्वाशौचान्ते कुर्यात् तत्र नियतकाले गुरुभृग्वोरस्ताद्यधिमासादिदोषो नास्ति अतीतकाले तु सो ऽस्त्येव अतीतकालश्चेत् अश्विनीरोहिणीमृगपुनर्वसुपुष्योत्तरात्रय हस्तत्र- यानुराधाश्रवणत्रयरेवतीषु शुभवारे रिक्ताऽष्टमीवर्जिततिथौ कार्यम् तत्र

पूर्वाह्णे पित्रादिः कृताह्निकः प्राणानायम्य देशकालसङ्कीर्त्तनान्ते अस्य कुमारस्य बैजिकगार्भिकैनोनिवर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वारा श्रीपरमेश्वरप्रीतये नामकरणमहङ्करिष्ये तदङ्गतया विहितं स्वस्तिवाचनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये इति सङ्कल्प्य तानि कृत्वा नामकरणपूर्वाङ्गत्वेन विहितम्ब्राह्मणत्रयाय भोजनं सम्प्रदास्ये इति सङ्कल्प्यानुच्छिष्टपाकेन त्रीनधिकान्ब्राह्मणान्भोजयित्वा ततः प्रशस्तपात्रे तण्डुलोपरि आदौ लक्ष्मीनृसिंहभक्त इत्यादि स्वकुलदेवतानाम लेख्यम् ततो मार्गशीर्षादेः कृष्णो ऽनन्तो

ऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः । उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ॥ योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥ इति क्रमादागतम्मासनाम चक्रधर इत्यादि लेख्यम् ततो ऽवकहडचक्रानुसारेण जन्मनक्षत्रपादप्रयुक्ताद्यक्षरज्जन्मनाम भैरव इत्यादि लेख्यम् ततः कादिपञ्चवर्गाणाङ्घोषसञ्ज्ञकतृतीयचतुर्थपञ्चमाक्षरहकाराद्यमन्तस्थसञ्ज्ञकयवरलाद्यन्यतममध्यमाक्षरन्दीर्घान्ताक्षरम्पितामहादिनाम कृत्प्रत्ययान्तन्द्व्यक्षरञ्चतुरक्षरम्वा शर्म ब्राह्मणस्य सुखवाचकशब्दान्तम् ब्राह्मणस्य यथा हरदत्त शर्म्मा हरि शर्म्मा इत्यादि क्षत्रियस्य तु वर्म्मा यथा हरदत्त वर्म्मा

हर वर्म्मा हरदत्तसिंह हरसिंह इत्यादि वैश्यस्य तु हरिगुप्त इत्यादि
शूद्रस्य तु हरिदास इत्यादि लेख्यम् नामदेवताभ्य इति सम्पूज्य ततो
मातुरुत्सङ्गस्थशिशोर्द्दक्षिणे कर्णे कुलनाम्ना लक्ष्मीनृसिंह भक्तोऽसीत्यादि
कथनीयम् मासनाम्ना चक्रधर इत्यादि नक्षत्रनाम्ना भैरवोऽसीत्यादि
व्यावहारिकनाम्ना हरदत्त शर्म्माऽसीत्यादिनामचतुष्टयं कथनीयम् विप्रै-
र्मनो जूतिरिति मन्त्रान्ते नाम सुप्रतिष्ठितमस्तु इति वक्तव्यम् तत
उत्थितो बद्धाञ्जलिः कर्ता कुलनाम्ना लक्ष्मीनृसिंहभक्तनामायम्भवतो
ऽभिवादयते इति वदेत् ते च आयुष्मान् भवतु लक्ष्मीनृसिंहभक्त इति

वदेयुः एवमेव कर्ता मासनाम्ना चक्रधरनामायम्भवतो ऽभिवादयते इति वदेत् ते च आयुष्मान् भवतु चक्रधरशर्म्मा इति वदेयुः ततः कर्ता नक्षत्रनाम्ना भैरवशर्म्माऽयम्भवतोऽभिवादयते इति वदेत् ते च आयुष्मान् भवतु भैरवशर्म्मा इति वदेयुः पुनः कर्ता व्यावहारिकनाम्ना हरदत्त शर्म्माऽयम्भवतोऽभिवादयते इति वदेत् ते च आयुष्मान् भवतु हरदत्त शर्म्मा इति वदेयुः इति यस्य यथागतन्नामचतुष्टयमभिवादनप्रत्यभिवादनेषूह्यम् । ततः कर्ता विप्रान्नत्वा कृतैतन्नामकरणाङ्गतया विहितन्दशसङ्ख्याकब्राह्मणेभ्यो भोजनं सम्प्रदास्ये इति सङ्कल्प्य ब्राह्मणान्दश भोज-

येत् विप्रान्सम्भोज्य ताम्बूलदक्षिणाभिस्तेभ्य आशिषो गृह्णीयात् कन्यायास्तु अयुजाक्षरमाकारान्तन्तद्धितप्रत्ययान्तङ्कार्यम् एवम्मासनामस्वपि कृष्णाऽनन्ताऽच्युता चक्रिणी वैकुण्ठा जनार्दना उपेन्द्री यज्ञपुरुषा वासुदेवा हरिणी योगेशी पुण्डरीकाक्षा इति ॥ इति संस्कारनृसिंहे नामकरणप्रयोगः ॥

॥ अथ पालकारोहः ॥ स च नामकरणदिने तदुक्तमुहूर्ते वा कुलदेवतां सम्पूज्यालङ्कृतं शिशुं हरिद्रादिचर्चिते पालके पतिपुत्रवत्यः स्त्रियो योगशायिनं स्मरन्त्यो गीतवाद्यैः प्राक् शिरसन्दक्षिणशिरसम्वा न्यसेत् अन्यदपि यथाचारङ्कार्यम् ॥ इति पालकारोहः ॥ अथ दुग्धपानम् ॥ तच्चै-

कत्रिंशे शुभे दिने तत्रासम्भवेऽन्नप्राशनोक्ते काले कुलदेवतां सम्पूज्य माताऽन्या वा सुभगा शङ्खमध्यस्थदुग्धं राहुरहितदिङ्मुखं शिशुम्पाययेत् ॥ इति दुग्धप्राशनम् । अथ निष्क्रमणम् ॥ तच्च जन्मतश्चतुर्थे मासि शुक्लपक्षे रिक्तापर्वषष्ठ्यष्टमीद्वादशीवर्जिततिथौ शुभवासरे अश्विनीमृगपुनर्वसुपुष्य-हस्तानुराधाऽभिजिच्छ्रवणधनिष्ठारेवतीषु कुम्भमीनवर्जितलग्ने शुभांशे पापग्रहवर्जिते केन्द्रत्रिकोणाष्टमद्वादशस्थानेषु शुभयुक्ते केन्द्रत्रिकोणे कार्यम् तत्र पत्नीकुमारसहितः कृतमङ्गलस्नान आचम्य प्राणायामत्रयदे-शकालकीर्तनान्ते अस्य कुमारस्य निष्क्रमणमहङ्करिष्ये तदङ्गतया विहितं

स्वस्तिवाचनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्च क-
रिष्ये तानि कृत्वा उक्तलग्ने वेदवाद्यघोषपुरस्सरम्भार्यया सह गृहाद्ब-
हिरानीय तच्चक्षुरित्यस्य दध्यङ्ङाथर्वणऋषिः पुरउष्णिक्छन्दः सूर्यो देवता
सूर्यावेक्षणे विनियोगः तच्चक्षु० शतात् इति मन्त्रेण स्वयम्पठितेन सूर्यन्द-
र्शयेत् तत आगत्य चन्द्रार्कयोर्दिगीशानान्दिशाञ्च वरुणस्य च । निक्षेपा-
र्थमहन्दद्मि ते त्वां रक्षन्तु सर्वतः ॥ १ ॥ अप्रमत्तम्प्रमत्तम्वा दिवारात्रम-
थापि वा । रक्षन्तु सततं सर्वे देवा इन्द्रपुरोगमाः ॥ २ ॥ इति विभूतिं
तस्य सर्वाङ्गेषु लापयेत् अस्मिन्नेव दिने रात्रौ चन्द्रञ्चैव प्रदर्शयेत् ॥ ३ ॥

कृत्वैतन्निष्क्रमणाङ्गतया विहितन्दशब्राह्मणेभ्यो भोजनं सम्प्रदास्य इति सङ्क-
ल्प्य तान्भोजयेत् ॥ इति सप्तर्ष्युपाख्यनरहरिभट्टविरचिते संस्कारनृसिंहे
निष्क्रमणं समाप्तम् ॥ अथ प्रोष्यगृहागमन विधिः ॥ तत्र प्रसङ्गात्साग्निकस्य
प्रवाससमये उपस्थानम् प्रवत्स्यन् यजमानः पञ्च भूसंस्कारान्कृत्वाऽऽहव-
नीयदक्षिणाग्नी विहृत्य नर्येत्यादित्रयाणां यजुषाम् आदित्यस्यार्षं क्रमेण
गार्हपत्याहवनीयदक्षिणाग्नयो देवताः उपस्थाने विनियोगः गार्हपत्यम् नर्य्य
प्रजाम्मेपाहि इत्युपतिष्ठते अथाऽऽहवनीयम् शंस्य पशून्मे पाहि इत्युप-
तिष्ठते अथ दक्षिणाग्निम् अथर्य्य पितुम्मे पाहि इत्युपतिष्ठते सभ्याय

नमः इति सभ्यम् आवसथ्याय नमः इत्यावसथ्यञ्चोपतिष्ठते ततो वाग्य-
मेन गृहसीमान्तम् ग्रामसीमान्तम् वा गत्वा वाग्विसर्गः। यथाकालं यज-
मानेन त्यागोपस्थानजपादि कार्यम् प्रोष्येत्य ग्रामसीमाङ् गृहसीमास्वा
ऽऽरभ्य समित्पाणिर्वाग्यमेन कञ्चिदुर्वादिकमप्यनुपेत्य गृहमागत्य स्नात्वा-
ऽऽचम्योपस्थानार्थम्पञ्च भूसंस्कारपूर्वकमग्निं विहृत्य आगन्मेत्यादित्रया-
णामादित्यस्यार्षम् आद्यन्तयोरनुष्टुप् मध्यमस्य न्यङ्कुसारिणी बृहती क्रमे-
णाहवनीयगार्हपत्यान्वाहार्यपचना देवताः उपस्थाने० आदौ आहवनी-
यम् आगन्मविश्ववेदस० आयच्छस्व इत्युपस्थायोपविश्य तूष्णीं समिध-

माधाय परिसमूहनन्तृणादेः प्रक्षेपः अथ गार्हपत्यम् अयमग्निर्गृहपति० आयच्छस्व इत्युपस्थायोपविश्य समिधमाधाय तृणादेः प्रक्षेपः अथ दक्षिणाग्निम् अयमग्निः पुरीष्यो० आयच्छस्व इत्युपस्थायोपविश्य समिधमाधाय तृणादेः प्रक्षेपः ततः सभ्याय नमः आवसथ्याय० इति तयोरुपस्थानम् अथ वा गमने आगमने च तूष्णीमेवोपस्थानम् अथ गृहानेत्य पुत्रादीन् गृहामाबिभीतेत्यादितिसृणां शंयुर्बार्हस्पत्यऋषिः आद्यास्त्रिष्टुप् विराड् रूपा द्वितीयाऽनुष्टुप् तृतीयामहापङ्क्तिस्त्र्यवसाना तिस्रोऽपि वास्तव्यः गृहामेत्यादि गृहेषु न इत्यन्तस्य गृहोपस्थाने क्षेमायव इत्यादेः

प्रवेशने च विनियोगः गृहामाबिभीत० मोदमानः १ येषामध्येति० जानतः २ उपहूता ऽइह गृहेषुनः इत्युपतिष्ठते अथ क्षेमायवः० शंय्योः शंय्याः ॥ ३ ॥ प्रविशति पुत्रन्दृष्ट्वा जपति अङ्गादङ्गादित्यस्य प्रजापति० अनुष्टुप्० आयुर्दे० जपे वि० अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि सजीव शरदः शतमिति अथास्य मूर्द्धानं प्रजापतेष्ट्वेति द्वयोः परमेष्ठी ऋषिः उष्णिक्० प्रजापतिर्दे० अवघ्राणे० प्रजापतेष्ट्वा हिङ्कारेणावजिघ्रामि सहस्रायुषा हरदत्तशर्म्मन् जीव शरदः शतम् इत्यवजिघ्रति मन्त्रेण सकृद्द्विस्तूष्णीम् ततो गवाँत्वाहिङ्कारेणावजिघ्रामि सहस्रायुषा

हरदत्तशर्म्मन् जीव शरदः शतम् इति मन्त्रेण सकृद् द्विस्तूष्णीम् मूर्द्धान-
मवजिघ्रति अथास्य दक्षिणे कर्णे जपति अस्मे प्रयन्धीन्द्रश्रेष्ठानीत्यनयोः
प्रजा० त्रिष्टुप्० इन्द्रो० दक्षिणसव्यकर्णयोर्जपे० अस्मेप्रयन्धि मघवन्नृजीषिन्नि-
न्द्ररायो विश्ववारस्य भूरेः अस्मे शतꣳ शरदो जीवसे धाऽ अस्मेवीराञ्छश्वत-
इन्द्रशिप्रिन् ॥ अथ सव्यकर्णे जपति इन्द्रश्रेष्ठानि द्रविणानि धेहि चित्ति-
न्दक्षस्य सुभगत्वमस्मे पोषꣳ रयीणामरिष्टिन्तनूनाꣳ स्वात्मानं वाचः
सुदिनत्वमह्नाम् इति स्त्र्यपत्यस्य तु मूर्द्धानमेवावजिघ्रति तूष्णीम् ॥ इति
सप्तर्ष्युपाख्यनरहरिभट्टविरचिते संस्कारनृसिंहे प्रोष्येत्यकृत्यम् ॥ अथो-

पवेशनम् ॥ तत्पञ्चमे मासि शुभवारे अश्विनीरोहिणीमृगपुष्योत्तरात्रय ज्येष्ठानक्षत्रेषु कार्यम् तत्र भार्याशिशुसहितः कृतमङ्गलस्नान आचमनप्राणायामत्रयान्ते अस्य कुमारस्योपवेशनमहङ्करिष्ये तदङ्गतया विहितङ्गणेशपूजनपूर्वकं स्वस्तिवाचनम्वराहपृथिवीपूजनञ्चाहङ्करिष्ये तत्कृत्वा वराहाय नमः पृथिव्यै नमः इति नाममन्त्रेण सम्पूज्य भूभागमुपलिप्य मङ्गलगीतवाद्यैरलङ्कृतशिशुमुपवेशयेत् तत्र मन्त्राः रक्षैनं वसुधे देवि सर्वदा सर्वगं शुभे । आयुः प्रमाणन्निखिलन्निक्षिपस्व हरिप्रिये ॥ १ ॥ अचिरादायुषस्त्वस्य ये केचित्परिपन्थिनः । जीविताराेग्यवित्तेषु निर्दहस्वाचि-

रेण तान् ॥ २ ॥ धारिण्यशेषभूतानां मातस्त्वमधिकाह्यसि । कुमारम्याहि मातस्त्वं ब्रह्मा तदनुमन्यतामिति ॥ ३ ॥ ततस्तन्नीराज्य ब्राह्मणान् सम्पूज्य तैर्दत्ताशिषो गृह्णीयात् ॥ इत्युपवेशनम् ॥ अथान्नप्राशनम् ॥ तच्च जन्मतः षष्ठेऽष्टमे वा मासि पुत्रस्य पुत्र्यास्तु पञ्चमे सप्तमे वा प्रतिपत्षष्ठ्यष्टमीरिक्ताद्वादशीवर्जिततिथौ बुधगुरुभृगुवारे अश्विनीरोहिणीमृगपुनर्वसुपुष्योत्तरात्रयहस्तत्रयानुराधाश्रवणत्रयरेवतीनक्षत्रे ग्रहमात्रवर्जिताष्टमद्वादशस्थाने पापग्रहवर्जितशुभग्रहयुक्तकेन्द्रत्रिकोणे मेषवृश्चिकमीनवर्जितलग्ने कार्यम् उक्तकाले गुर्वस्तादिदोषो नास्ति भार्याशिशुसहितः कृतमङ्ग-

लस्नान आचमनप्राणायामत्रयदेशकालसङ्कीर्तनान्ते ममास्य कुमारस्या-
न्नप्राशनसंस्कारङ्कर्तुन्तदङ्गतया विहितं स्वस्तिवाचनपूर्वकम्मातृकापूजनं
वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्य इति सङ्कल्प्य कृत्वा
च स्थण्डिले पञ्च भूसंस्कारान्कृत्वा लौकिकाग्नेः स्थापनम् पुनराचमनप्रा-
णायामदेशकालकीर्तनान्ते ममास्य कुमारस्य मातृगर्भमलप्राशनशुद्धिवै-
जिकगार्भिकैनोनिवर्हणब्रह्मवर्चसादिसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमन्नप्रा-
शनमहङ्करिष्ये इति सङ्कल्प्यः तत्र पूर्वे० अपरेण० द्वे पवित्रे ताम्रमय्याज्य०
ताम्रमयी चरु० पालाश्यः स० प्राञ्चा० समिद्धु० पूर्ण० दक्षिणा हन्तेति प्रा-

घानम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये अथर्ष्यादि देवीम्वाचमित्यस्य भा-
र्गव० त्रिष्टुप्० देवीवाग्देवता आज्यहोमे वि० वाजो नो अद्येत्यस्य देवा
ऋषयः त्रिष्टुप्० अन्नन्दैवतम् आज्यहोमे वि० भूर्भुवः स्वरिति महाव्याहृती-
नाम्पूर्ववत् ॥ अथ देवताऽभिध्यानम् ॥ अत्र प्रजापतिम् इन्द्रम् अग्निम् सो-
मम् देवीं वाचम् देवीं वाचम् वाजम् एता आज्येन प्राणम् अपानम् चक्षुः श्रो-
त्रम् एताश्चरुणा घोषेणाग्निं स्विष्टकृतम् अग्निम् वायुम् सूर्यम् अग्नीवरुणौ २
अग्निम् वरुणम् सवितारम् विष्णुम् विश्वान्देवान्मरुतः स्वर्कान् वरुणम्
प्रजापतिम् एताः पुनराज्येनैता देवता अङ्गप्रधानार्था अस्मिन्कर्मण्यहं

लस्नान आचमनप्राणायामत्रयदेशकालसङ्कीर्तनान्ते ममास्य कुमारस्या-
न्नप्राशनसंस्कारङ्कर्तुन्तदङ्गतया विहितं स्वस्तिवाचनपूर्वकम्मातृकापूजनं
वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्य इति सङ्कल्प्य कृत्वा
च स्थण्डिले पञ्च भूसंस्कारान्कृत्वा लौकिकाग्नेः स्थापनम् पुनराचमनप्रा-
णायामदेशकालकीर्तनान्ते ममास्य कुमारस्य मातृगर्भमलप्राशनशुद्धिवै-
जिकगार्भिकैनोनिवर्हणब्रह्मवर्चसादिसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमन्नप्रा-
शनमहङ्करिष्ये इति सङ्कल्पः तत्र पूर्वं० अपरेण० द्वे पवित्रे ताम्रमय्याज्य०
ताम्रमयी चरु० पालाश्यः स० प्राञ्चा० समिद्ध० पूर्ण० दक्षिणा हन्तेति प्रा-

ध्यानम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये अथर्ष्यादि देवीम्वाचमित्यस्य भा-
र्गव० त्रिष्टुप्० देवीवाग्देवता आज्यहोमे वि० वाजो नो अद्येत्यस्य देवा
ऋषयः त्रिष्टुप्० अन्नन्दैवतम् आज्यहोमे वि० भूर्भुवः स्वरिति महाव्याहृती-
नाम्पूर्ववत् ॥ अथ देवताऽभिध्यानम् ॥ अत्र प्रजापतिम् इन्द्रम् अग्निम् सो-
मम् देवीं वाचम् देवीं वाचम् वाजम् एता आज्येन प्राणम् अपानम् चक्षुः श्रो-
त्रम् एताश्चरुणा शेषेणाग्निं स्विष्टकृतम् अग्निम् वायुम् सूर्यम् अग्नीवरुणौ २
अग्निम् वरुणम् सवितारम् विष्णुम् विश्वान्देवान्मरुतः स्वर्कान् वरुणम्
प्रजापतिम् एताः पुनराज्येनैता देवता अङ्गप्रधानार्था अस्मिन्कर्मण्यहं

यद्ये ततो ब्रह्मोपवेशनादि पूर्णपात्रासादनान्ते मधुरादिसर्वान् रसान् सर्वमन्नं मधु घृतं सुवर्णञ्च शास्त्राणि शस्त्राणि लेखनीम् वस्त्रम् रजतम् सुवर्णम् भाण्डानि चोपकल्पनीयानि ततः पवित्रकरणाद्याज्यभागान्ते आज्येनानन्वारब्धः देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सानोमन्द्रेषमूर्जन्दुहाना धेनुर्वागस्मानुपसुष्टु तैतु स्वाहा इदं देव्यै वाचे न मम पुनः देवीञ्च० सुष्टुतैतु स्वाहा वाजोनोऽद्य० येयछं स्वाहा इदन्देव्यै वाचे वाजाय च न मम ततश्चरुमभिघार्य स्रुवेणैव ॐ प्राणेनान्नमशीय स्वाहा इदम्प्राणाय न मम ॐ अपानेन गन्धानशीय स्वाहा इद-

मपानाय न मम ॐ चक्षुषा रूपाण्यशीय स्वाहा इदं चक्षुषे न मम ॐ श्रोत्रेण यशोऽशीय स्वाहा इदं श्रोत्राय न मम चरोरुत्तरार्द्धादग्नेरुत्तरार्द्धे ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ततोऽन्वारब्धः भूरादिप्राजापत्यन्ता नवाऽऽहुतयः ततः संस्रवप्राशनादिप्रणीताविमोकान्तङ् कृत्वा स्वर्णादिपात्रे सर्वान् रसान् सर्वमन्नमध्याज्यमेकीकृत्य हस्तगृहीत-सुवर्णेन देवताग्रे मातुरुत्सङ्गस्थशिशुं हन्त इति मन्त्रेण प्राशयेत् कुमार्या-स्तूष्णीमेव तत उपकल्पितवस्तुमध्ये शिशुमुपवेश्य तन्मध्ये यदेवादौ गृह्णाति तेन तस्य जीविका परीक्षणीया ॥ इत्यन्नप्राशनम् ॥ अथ चूडाकर-

णाम् ॥ तच्च प्रथमे द्वितीये तृतीये पञ्चमे वा वर्षे उपनीत्या सह वा गुरु-
भृग्वोरनस्तङ्गतयोश्चैत्रवर्जितमाघादिपञ्चमासे शुक्ले पर्वरिक्ता षष्ठीप्रतिपद्व-
र्जिततिथौ सोमबुधगुरुभृगुवारे अश्विनीपुनर्वसुपुष्यहस्तचित्रास्वातीज्येष्ठा
श्रवणधनिष्ठाशततारकारेवतीनक्षत्रे भृगुपापरहितसप्तमस्थाने ग्रहमात्र-
वर्जिताष्टमस्थाने चन्द्रपापविनिर्मुक्ते लग्ने शुभांशे सन्ध्यारहितपूर्वाह्ने मध्य-
त्र्यंशे वा माता कुमारमादायाऽऽप्लाव्याहते वाससी परिधाप्य बहिःशाला-
यामङ्क आधाय पत्युर्दक्षिणतः पश्चादग्नेरुपविशति पिता आचम्य प्रा-
णानायम्य ॐ श्रीमन्महागणाधिपतये नमः ॐ श्रीलक्ष्मीनारायणाभ्या-

न्नमः ॐ श्रीउमामहेश्वराभ्यान्नमः शचीपुरन्दराभ्यान्नमः मातापितृभ्यान्नमः
इष्टदेवताभ्यो नमः कुलदेवताभ्यो नमः सर्वेभ्यो देवेभ्यो नमः सर्वेभ्यो ब्रा-
ह्मणेभ्यो नमः सुमुखश्चेत्यादि देशकालकीर्तनान्ते अस्य कुमारस्य श्वः अद्य
वा चूडाकरणङ्कर्तुन्तदङ्गम्पुण्याहवाचनमविघ्नपूजनम्मण्डपदेवतापूजनम्मा-
तृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ नि-
र्विघ्नतासिद्ध्यर्थङ्गणपतिदुर्गापूजनमहङ्करिष्ये इति सङ्कल्प्य तानि कृत्वा अनु-
च्छिष्टपाकेन त्रीन् ब्राह्मणान् चूडाकरणपूर्वाङ्गतया विहितत्वेनाहम्भोजयिष्ये
इति सङ्कल्प्य तान् भोजयित्वा परिसमूहनाद्यग्निस्थापनम् पुनर्देशकालकी-

र्तनान्ते अस्य कुमारस्य बीजगर्भसमुद्भवैनोनिर्बर्हणेन बलायुर्वर्चोऽभिवृद्धि-
द्वारा श्रीपरमेश्वरप्रीतये चौलाख्यङ्कर्म करिष्ये इति सङ्कल्पः तत्र पूर्वेण ब्रह्मणो
गमनम् अपरेण पात्राऽऽसादनम् द्वे पवित्रे ताम्रमय्याज्यस्थाली पालाश्यः
समिधः प्राञ्चावाघारौ समिद्धतमे आज्यभागौ पूर्णपात्रम् दक्षिणा घृतपिण्डः
सकेशगोमयपिण्डस्योदकान्ते निधानम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये
इति वैकल्पिकान् स्मृत्वा ॐ भूर्भुवः स्वरिति महाव्याहृतीनाम्प्रजापति
ऋषिः क्रमेण गायत्र्युष्णिगनुष्टुप्छन्दाँसि अग्निवायुसूर्या देवता त्वन्नोऽअग्ने
सत्वन्नोऽअग्ने अयाश्चाग्ने येते शतमिति मन्त्राणाम्वामदेवऋषिः त्रिष्टुप्

छन्दः अग्नीवरुणौ देवते प्रथमयोः तृतीयस्याग्निर्दैवता चतुर्थस्य वरुण-
स्सविता विष्णुर्विश्वेदेवामरुतः स्वर्कादेवताः उदुत्तममिति शुनःशेपऋषिः
त्रिष्टुप्छन्दः वरुणो देवता सर्वेषां चूडाकरणाङ्गहोमे विनियोगः उष्णेन
वाय इत्यस्य परमेष्ठिऋषिः प्रतिष्ठाछन्दः अदितिर्दैवता नीरासेके विनियोगः
सवित्रेत्यस्य प्रजापतिऋषिः गायत्रीछन्दः आपोदेवता क्लेदने विनियोगः
ओषधइत्यस्य प्रजापतिऋषिः यजुश्छन्दः तरुणान्दैवतम् अन्तर्द्धाने विनि-
योगः शिवोनामेत्यस्य प्रजापतिऋषिः यजुश्छन्दः क्षुरो देवता क्षुरग्रहणे
विनियोगः निवर्तयामीत्यस्य प्रजापतिऋषिः यजुश्छन्दः लिङ्गोक्ता देवता

क्षुरगोदानसंलग्नीकरणे विनियोगः येनावपदित्यस्य आलम्बायनऋषिः पङ्क्तिश्छन्दः सवितादेवता सकेशतरुणाच्छेदने विनियोगः त्र्यायुषमित्यस्य नारायणऋषिः उष्णिक्छन्दः अग्निर्देवता सकेशतरुणाच्छेदने विनियोगः येन भूरिश्चरेत्यस्य वामदेवऋषिः यजुश्छन्दः क्षुरोदेवता छेदने विनि-योगः यत्क्षुरेत्यस्य वामदेवऋषिः यजुश्छन्दः क्षुरोदेवता शिरःप्रदक्षिणे विनियोगः अक्षण्वन्नित्यस्य वामदेवऋषिः यजुश्छन्दः क्षुरोदेवता क्षुर-दाने विनियोगः इत्यार्षादि स्मृत्वा अत्र प्रजापतिम् इन्द्रम् अग्निम् सो-मम् अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम्

सवितारम् विष्णुम् विश्वान्देवान्मरुतः स्वर्कान् वरुणम् प्रजापतिम् अग्निम्
स्विष्टकृतम् एता देवता आज्येनास्मिन् चूडाकर्मण्यहं यक्ष्ये पूर्ववद्ब्रह्मव-
रणादि चरुं विना पात्रासादनम् तत्राज्यपूर्णपात्रानन्तरम् उपकल्पनीयानि
शीतोदकम् उष्णोदकम् घृतपिण्डः त्रेणीशलली सप्तविंशतिकुशतरुणानि
ताम्रपरिष्कृतआयसः क्षुरः आनडुहगोमयपिण्डः नापितः वरश्च एतान्यु-
पकल्प्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्येतिवचनात्प्रोक्ष्य आज्य-
निर्वापादिपवित्रप्रतिपत्यन्तम्प्राकृतवत् तदन्ते ब्रह्मन् चूडाकरणाङ्गतया
विहितमिदम्पूर्णपात्रम्प्रतिगृह्यताम् प्रतिगृह्णामीति ब्रह्मा द्यौस्त्वा ददातु

पृथिवी त्वा प्रतिगृह्णातु इति जपति च प्रणीताविमोकः तत उष्णोदकमा-
दाय उष्णेन वा य उदकेनेह्यदिते केशान्वप इति मन्त्रेण शीतास्वप्सूष्णा आप
आसिञ्चति अथात्र घृतपिण्डम्प्रास्यति तूष्णीम् तत उदकमादाय सवित्रा
प्रसूतादैव्या आप उदन्तु ते तनून्दीर्घायुत्वाय वर्चसे इति दक्षिणशोदान-
मुन्दति तूष्णीम् त्रेण्याशलल्या विनीय त्रीणि कुशतरुणानि ओषधे त्रा-
यस्व इति अन्तर्दधाति तानि वामेन धारयति शिरोग्राण्यूर्ध्वमूलानि
ओषधे त्रायस्वेत्येतावदेव मन्त्रः ततो लोहक्षुरं शिवो नामासि स्वधितिस्ते
पिता नमस्ते अस्तु मामाहिंसीः इत्यादाय निवर्तयाम्यायुषेन्नाद्याय प्रज-

ननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय इति दक्षिणगोदाने संलग्नी-
करोति ततो येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् तेन
ब्रह्माणोवपतेदमस्यायुष्यं जरदष्टिर्यथासत् इति सकेशानि प्रच्छिद्यानडुहे
गोमयपिण्डे प्रास्यत्युत्तरतो ध्रियमाणे एवमेवोन्दनविनयनकुशतरुणत्रया-
न्तर्धानक्षुरसंलग्नीकरणच्छेदनगोमयपिण्डनिधानानि द्विरपरन्तूष्णीङ्कर्तव्यम्
अथ पश्चाद्गोदानम् सवित्रेत्युन्दनम् तूष्णीम् त्रेण्याशलल्या विनीय ओ-
षधे इति कुशतरुणत्रयान्तर्द्धानम् तूष्णीं क्षुरादानम् मन्त्रेण गृहीतत्वात्
एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनमिति श्रौतसूत्रात् निवर्तयामीति गोदान

क्षुरसंलग्नीकरणम् ततः त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नो अस्तु त्र्यायुषम् ॥ इति प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्यति अत्राप्येवमेव द्विरपरन्तूष्णीम् अथोत्तरतः गोदानम् सवित्रेत्युन्दनम् तूष्णीन्त्रेण्याशलल्या विनीय ओषधेति कुशतरुणत्रयान्तर्द्धानम् तूष्णीम् क्षुरादानम् निवर्तयामीति गोदानसंलग्नीकरणम् ततो येन भूरिश्चरादिवं ज्योक्चपश्चाद्धिसूर्यम् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये इति सकेशानि प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्यति अत्राप्येवमेव द्विरपरन्तूष्णीम् ततो यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वा वप-

तया विहितोऽयं वरः प्रतिगृह्यतामिति अत एवास्मिन्कर्मणि वरदानार्थ-
ङ्कर्तुरन्य आचार्योऽप्यपेक्षितः स्त्रीणामपि जातकर्मादिचूडाकरणान्तास्तू-
ष्णीं संस्काराः कार्याः होमस्तु समन्त्रः जातकर्मादिकाः स्त्रीणां चूडाकर्मा-
न्तिकाः क्रियाः । तूष्णीं होमः समन्त्रः स्यादिति गोभिलभाषितमिति रेणुः
ब्राह्मणेभ्यो भूयसीन्दक्षिणाङ्कृतकर्मसाद्गुण्यार्थं सम्प्रददे इति सङ्कल्प्य दत्वा
आशिषो गृहीत्वा कृतस्य चूडाकरणकर्मणोऽङ्गतया विहितान् दश ब्राह्म-
णान् भोजयिष्ये इति सङ्कल्प्य भोजयेत् यस्य स्मृत्येति विष्णुन्नत्वा कर्मस-
म्पूर्णतां वाचयित्वा मातृः विसर्जयेत् मण्डपदेवताश्च ॥ इति चूडाकरणम् ॥

अथ कर्णवेधः ॥ स च तृतीये पञ्चमे वर्षे गुरुभृग्वोरनस्तङ्गते चैत्रकार्तिक-
पौषफाल्गुनमासे पर्वरिक्तैकादश्यष्टमीव्यतिरिक्ततिथौ सोमबुधगुरुवारे
दिवैव अश्विनीमृगपुनर्वसुपुष्योत्तराफाल्गुनीहस्तचित्रानुराधोत्तराषाढाश्रव-
णधनिष्ठोत्तराभाद्रपदारेवतीनक्षत्रेषु शुभग्रहलग्नांशे कुमारं संस्नाप्य आ-
चम्य प्राणानायम्य देशकालकीर्तनान्ते अस्य कुमारस्याभरणधारणसिद्धि-
द्वारा परमेश्वरप्रीतये कर्णवेधमहङ्करिष्ये तदङ्गत्वेन गणेशपूजनम्पुण्याह-
वाचनं विष्णुशिवब्रह्मचन्द्रसूर्यदिगीशनासत्यसरस्वतीकुलदेवतागोब्राह्मण-
पूजनमहङ्करिष्ये इति सङ्कल्प्य तत्कृत्वा सम्पूज्य प्राङ्मुखङ् कुमारमुपवेश्य

भद्रङ्कर्णेभिरित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः लिं० दे० कर्णाभिमन्त्रणे विनियोगः भद्रङ्कर्णेभिरिति मन्त्रेण दक्षिणकर्णमभिमन्त्रयते वक्ष्यन्तीवेदेति मं० प्र० ऋ० त्रि० लिं० कर्णाभिमन्त्रणे विनियोगः वक्ष्यन्ती वे० द० पारयन्ती इति सव्यमभिमन्त्रयते कुमारस्य मधुरन्दत्वाऽथ भिन्द्यात् कुमारस्य दक्षिणमादौ कुमार्याः वामम् ततः कर्णवेधाङ्गतयैकं ब्राह्मणम्भोजयिष्ये इति सङ्कल्प्य भोजयेत् ॥ इति कर्णवेधः ॥ अथाक्षरारम्भः ॥ स च पञ्चमे वर्षे गुरुभृग्वोरस्तरहिते कुम्भार्कवर्जितोत्तरायणे अनध्यायरिक्ता षष्ठीवर्जिततिथौ भौमशनिहीनवारे भरणीत्रयोत्तरात्रयविशाखाज्येष्ठामघावर्ज्यनक्षत्रे पापग्रहर-

हितलग्नपञ्चमस्थाने ग्रहमात्रवर्जिताष्टमस्थाने शुभांशे ॥ अथ पिताऽऽ-
चम्य प्राणानायम्य देशकालकीर्तनान्ते अस्य कुमारस्य वाङ्मुखाय ग्रहण
धारणद्वारा परमेश्वरप्रीत्यर्थमक्षरविद्यारम्भमहङ्करिष्ये तदङ्गत्वेन गणेश-
पूजनम्पुण्याहवाचनविद्यादिपूजनमहङ्करिष्ये इति सङ्कल्प्य तत्कृत्वा ॐ
हरये नमः लक्ष्म्यै नमः सरस्वत्यै नमः विद्यायै नमः इति सम्पूज्य ब्राह्म-
णांश्च सम्पूज्य तैर्दत्ताशिषङ् कुमारं शिक्षयेत् ॥ इत्यक्षरस्वीकारः ॥ अथा-
तिक्रान्तसंस्कारविधिः ॥ संस्कारा अतिपद्येरन् स्वकालाच्चेत्कथञ्चन । हुत्वा-
ऽनादिष्टकङ् कुर्याद् ये तूपनयनादधः ॥ तथा भगवाँश्च आरभ्याधानमाचौ-

लात्कालेऽतीते तु कर्मणाम् । व्याहृत्याज्यं तु संस्कृत्य हुत्वा कर्म यथावि-
धि ॥ कार्यमिति शेषः ॥ स एवात्र प्रायश्चित्तमाह एतेष्वेकैकलोपेऽपि पाद-
कृच्छ्रं समाचरेत् । चौलादर्वाक् प्रकुर्वीत प्रायश्चित्तादनन्तरमिति ॥ अत्र
चौलादर्वागेतेष्वेकैकलोपे पादकृच्छ्रं समाचरेदित्यन्वयः चौलेत्वर्द्धकृच्छ्रम्
इदमबुद्धिपूर्वकरणे बुद्धिपूर्वन्तु सर्वत्र कृच्छ्रम् तत्राप्यतिक्रान्तङ्गर्भाधाना-
दितत्प्रसवपर्यन्तङ्कार्यम् जातकर्माद्युपनयनात्प्राक्कार्यम् पूर्वपूर्वसंस्कारस्यो-
त्तरोत्तरसंस्कारात्प्राक् गौणकालः तत्र प्रायश्चित्तङ् कृताकृतम् प्रायश्चित्तम-
कृत्वा वा गौणकाले समाचरेदिति वचनात् एवमत्रातीतसंस्कारविषये

उपनयनात्पूर्वं स बटुः कृतमङ्गलस्नानो धौतवस्त्रपरिधानः आचम्य प्राणा-
यामत्रयङ् कृत्वा देशकालकीर्तनान्ते अस्य कुमारस्य गर्भाधानादि चौला-
न्तानां संस्काराणां कालातिपत्तिदोषपरिहारेणाधिकारसिद्धिद्वारा परमेश्व-
रप्रीतये प्रायश्चित्तम्प्रतिसंस्कारम्पादकृच्छ्रम् चौले अर्द्धकृच्छ्रम् अमुकप्रत्या-
म्नायेनाहमाचरिष्य इति सङ्कल्प्य यथासङ्कल्पम्प्रत्याम्नायेन कर्तव्यम् कृच्छ्र-
प्रत्याम्नायस्तु गोदानन्तन्मूल्यन्द्वादशब्राह्मणभोजनमथ वा दशसहस्रगाय-
त्रीजपायुतगायत्री तिलहोमान्यतमः एवम्प्रायश्चित्तङ् कृत्वा पुनर्देशकाल-
कीर्तनान्ते अस्य कुमारस्य गर्भाधानादिचौलान्तसंस्काराणाङ्कालातिपत्ति-

दोषपरिहारेणाधिकारसिद्धिद्वारा परमेश्वरप्रीतये प्रायश्चित्तहोममहङ्करिष्ये
इति सङ्कल्प्य निरूप्याज्यमधिश्रित्य स्रुवं सम्मृज्योद्वास्योत्पूयावेक्ष्य गृही-
त्वा तिष्ठन्समिधमाधाय भूः स्वाहा इदमग्नये नमम भुवः स्वाहा इदं
वायवे न मम स्वः स्वाहा इदं सूर्याय नमम भूर्भुवः स्वः स्वाहा इदम्प्रजा-
पतये नमम त्वन्नो अग्ने वरु० स त्वन्नो अग्ने० अयाश्चाग्ने० येते शतम्०
उदुत्तमम्० भवतन्न० इति हुत्वा पूर्ववत्त्यागः ॥ इत्यनादिष्टहोमङ्कृत्वा
यथोक्तक्रमेणैव संस्काराः कार्याः केचित्प्रस्तुतकर्मार्थं संस्कृताज्येन पर्युक्ष-
णान्ते अनादिष्टं हुत्वा प्रस्तुतङ्कर्म कुर्वन्ति तदयुक्तम् अत्र मातृकापूजन-

नान्दीश्राद्धन्त्वेकमेव न पृथक् पृथक् ॥ गणशः क्रियमाणानाम्मातॄणाम्पूजनं सकृत् । सकृदेव भवेच्छ्राद्धं होममन्त्राः पृथक् पृथक् । इति वचनात् ॥ इत्यतिक्रान्तसंस्कारविधिः ॥ अथोपनयनम् तच्च गर्भपञ्चममारभ्य नवमपर्यन्तङ्कार्यम् तथाचोक्तम् ॥ मनुः । ब्रह्मवर्चसकामस्य कार्य्यम्विप्रस्य पञ्चमे ॥ विष्णुः । षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे । अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः । सङ्ग्रहेऽपि । सप्तमे वाऽष्टमे वर्षे नवमे दशमे तथा । एकादशे द्वादशे वा ह्युपनेया द्विजातयः ॥ अत्रैकादशे क्षत्रियस्य द्वादशे वैश्यस्येति विवेकः अत एवाष्टवर्षम्ब्राह्मणमुपनयेद्गर्भाष्टमे वैकादशवर्षं

राजन्यन्द्वादशवर्षे वैश्यमिति कातीयम् अष्टवर्षाणि अतीतानि यस्येति व्याख्यातवान् अथर्वणसूत्रे गर्भपञ्चमेऽब्दे ब्राह्मणमुपनयेद्गर्भाष्टमे वा गर्भाष्टमे राजन्यङ्गर्भद्वादशे वैश्यमिति हरिहरवराहसूत्रे गर्भाष्टमेषु ब्राह्मणमुपनयेत् षष्ठेऽष्टमे पञ्चमे वा ॥ अत्रगर्भाष्टमेष्विति बहुवचनङ्गर्भषष्ठगर्भसप्तमप्राप्त्यर्थम् एवं क्षत्रियवैश्ययोरपि राज्ञो बलार्थिनः षडिति वाक्यवशात् षष्ठादिवर्षे कार्यम् तच्च चतुर्थाष्टमद्वादशस्थे गुरौ न कार्यम् प्रथमतृतीयषष्ठदशमराशिस्थं गुरुं सम्पूज्य कार्यम् ज्येष्ठापत्यस्य ज्येष्ठजन्ममासौ विना माघादिपञ्चमासेषु पर्वरिक्ता प्रतिपत्सप्तमीत्रयोदशीरहितासु तिथिषु

भौमशनिरहितवारेषु भरणीकृत्तिकाविशाखामघाज्येष्ठाशततारकावर्जितन-
क्षत्रेषु व्यतीपातवैधृतिपरिघपूर्वार्द्धविष्टिसङ्क्रान्तिसन्ध्यागर्जादिरहिते शुभ-
काले चन्द्रपापरहिते लग्ने पापरहितपञ्चमस्थाने चन्द्रशुक्रलग्ने अंशरहि-
तषष्ठस्थाने ग्रहमात्रवर्जिताष्टमस्थाने स्वोच्चस्थशुभाक्रान्तलग्ने पापरहि-
तशुभांशे त्रिधा विभक्तदिवसद्वितीयांशे पूर्वाह्णे वा कार्यम् ॥ अथ प्रयोगः ॥
तत्रोपनयनमुहूर्तात्पूर्वदिने सुस्नातः सुप्रक्षालितपाणिपादः परिहितधौता-
म्बरो बटुना सह शुचौ देशे उपविश्याचम्य प्राणायामत्रयङ्कृत्वा देशका-
लकीर्तनान्ते ममास्य कुमारस्योपनयनकर्तृत्वाधिकारसिद्धिद्वारा परमेश्वर-

प्रीतये कृच्छ्रत्रयम्प्रायश्चित्तममुकप्रत्याम्नायेनाहमाचरिष्ये इति सङ्कल्पङ् कृ-
त्वा यथोक्तप्रत्याम्नायेन कार्यम् एवम्बटुरपि आचम्य प्राणायामत्रयङ् कृत्वा
देशकालकीर्तनान्ते ममोपनयनत्वाधिकारसिद्धिद्वारा परमेश्वरप्रीतये
कृच्छ्रत्रयङ्करिष्ये इति सङ्कल्पङ् कृत्वा यथोक्तप्रत्याम्नायेन कार्यम् आचा-
र्यस्तु प्राणायामदेशकालकीर्तनान्ते गायत्र्युपदेशाधिकारार्थमयुतगायत्री-
जपमहङ्करिष्ये इति सङ्कल्प्यायुतजपङ् कुर्यात् ततः श्रीलक्ष्मीनारायणाभ्या-
न्नम इत्यादि पुनर्देशकालकीर्तनान्ते अस्य कुमारस्य श्व उपनयनङ्कर्तुन्तद-
ङ्गतया विहितं स्वस्तिवाचनपूर्वकमविघ्नपूजनम्मण्डपदेवतापूजनम्मातृका-

पूजनस्वसोद्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये ॥ उपनयने बटोर्वैदिका ॥ प्राक् पश्चिमाद्दम्पदषट्कयुक्तमुदीच्ययाम्यानि पदानि पञ्च । एवङ्कुरो ज्योतिषरत्नवेदिका बटोः शतायुर्मुनयो वदन्ति ॥ पूर्वमकृतचूडस्य तु अस्य कुमारस्य चूडोपनयने कर्तुन्तदङ्गतया विहितेत्यादि सङ्कल्प्य तत्कार्यम् उपनयनदिने कृतनित्यक्रियः कृतमङ्गलस्नानः कुमारपत्नीसहितो मण्डप उपविश्य देशकालौ सङ्कीर्त्य अस्य कुमारस्योपनयनङ्कर्तुन्तत्पूर्वाङ्गभूतं वपनङ्करिष्ये इति सङ्कल्प्य तत्कारयेत् पुनः सुस्नातबटुमुपवेश्य देशकालौ सङ्कीर्त्यास्य कुमारस्योपनयनङ्कर्तुन्तत्पूर्वाङ्गतया विहितं ब्राह्मणत्रय-

म्भोजयिष्ये इति सङ्कल्प्य नवकृतान्नेन सद्यस्तान्भोजयेत् तत्पङ्क्तौ मुण्डित-
शिरसं बटुम्भोजयेत् ततो बहिः शालायाम्पञ्चभूसंस्कारपूर्वकं लौकिकाग्नि-
स्थापनम् आचम्य प्राणायामत्रयङ् कृत्वा देशकालकीर्तनान्ते अस्य कुमा-
रस्य ब्राह्मण्याभिव्यक्तिद्विजत्वसिद्ध्यर्थं वेदाध्ययनाधिकारार्थञ्चोपनयनमहं-
करिष्ये इति सङ्कल्पः अमुकवर्षे उपनयनम् । इयन्दुरुक्तमिति मेखला-
बन्धः पालाशो दण्डः केशसम्मितः ऊर्द्धदण्डस्य ग्रहणम् पूर्वेण ब्रह्मणो
गमनम् अपरेण पात्रासादनम् द्वे पवित्रे ताम्रमय्याज्यस्थाली पालाश्यः
समिधः प्राञ्चावाघारौ समिद्धतमे आज्यभागौ पूर्णपात्रन्दक्षिणा अग्नेरुत्त-

रत आसीनाय गायत्रीप्रदानम् अग्नये समिधमिति समिदाधानम् प्रथमा
भिक्षा मातुः अन्या अपरिमिता अमौनम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये
येनेन्द्रायेतिमन्त्रस्य अङ्गिराऋषिः बृहतीछन्दः बृहस्पतिर्देवता वस्त्रपरि-
धाने विनियोगः ॥ १ ॥ इयन्दुरुक्तमित्यस्य वामदेवऋषिः त्रिष्टुप्० मेखला
देवता मेखलाबन्धने विनियोगः ॥ २ ॥ यज्ञोपवीतमित्यस्य परमेष्ठी ऋषिः
त्रिष्टुप्छन्दः लिङ्गोक्तादेवता श्रौतस्मार्तकर्मानुष्ठानफलसिद्ध्यर्थमुपवीत-
धारणे विनियोगः ॥ ३ ॥ मित्रस्य चक्षुरित्यस्य पर० ऋ० त्रि० लिं० दे०
ऐणेयोत्तरीयधारणे विनियोगः ॥ ४ ॥ यो मे दण्ड इत्यस्य प्रजाप० यजुः०

दण्डो० दण्डग्रहणे वि० ॥ ५ ॥ आपोहिष्ठेति तिसृणां सिन्धुद्वीपऋषिः गायत्रीछन्दः आपोदेवता अञ्जलिपूरणे विनियोगः ॥ ६ ॥ तच्चक्षुरित्यस्य दध्यङ्ङाथर्वण० उष्णिक्छन्दः सूर्यो दे० सूर्यावेक्षणे वि० ॥ ७ ॥ मम व्रत-इत्यस्य प्रजापतिऋषिः त्रिष्टुप्छन्दः बृहस्पतिर्देवता हृदयालम्भने वि० ॥ ८ ॥ इन्द्रस्येत्यस्य प्रजा० यजुः० लिङ्गोक्तादे० जपे वि० ॥ ९ ॥ प्रजापतये त्यादीनां प्रजाप० यजुः० लिङ्गो० रक्षणे वि० ॥ १० ॥ ॐ भूर्भुवः स्वरिति महाव्याहृतीनां प्रजा० क्रमेण गायत्र्युष्णिगनुष्टुप् छन्दांसि अग्निवायुसूर्या देवता त्वन्नो अग्ने सत्वन्नो अग्ने अयाश्चाग्ने ये ते शतमिति मन्त्राणां

वामदेवऋषिः त्रिष्टुप्छन्दः अग्नीवरुणौ देवते प्रथमयोस्तृतीयस्याग्निर्दे-
वता चतुर्थस्य वरुणःसविता विष्णुर्विश्वेदेवा मरुतः स्वर्का देवताः उदुत्त-
ममिति शुनःशेपऋषिः त्रि० वरु० सर्वेषामुपनयनाङ्गहोमे विनियोगः॥१८ ॥
ॐ तत्सवितुरित्यस्य विश्वामित्रऋषिः गायत्रीछन्दः सवितादेवता गाय-
त्र्यनुवाचने विनियोगः ॐ अग्ने सुश्रव इत्यादीनाम्ब्रह्माऋषिः यजूंषि०
अग्निर्देवता समिन्धने विनियोगः अग्नये समिधमित्यस्य प्रजा० आकृती
छन्दः सवितादेवता समिदाधाने वि० तनूपा अग्न इत्यादीनाम्बृहद्देवा
ऋषयः यजूंषि० अग्निर्देवता मुखविमर्शने वि० ॥ ४ ॥ अङ्गानि चम

इत्यादीनाम्प्रजा० उष्णि० लिङ्गो० भस्मना तिलकधारणे वि० ॥ ५ ॥ त्र्यायुषमित्यस्य नारायणऋषिः उष्णिक्छन्दः लिङ्गोक्तादेवता भस्मना तिलककरणे वि० ॥ ६ ॥ इत्यार्षादि स्मृत्वा अत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम् सवितारम् विष्णुम् विश्वान्देवान्मरुतः स्वर्कान् वरुणम् प्रजापतिम् अग्निम् स्विष्टकृतम् एतादेवता अङ्गप्रधानार्थां आज्येनास्मिन्नुपनयनाख्ये कर्मण्यहं यक्ष्ये ततः सुमङ्गल्यद्रव्यैः सुस्नातम्पुष्पसुवर्णाद्यैरलङ्कृतङ् कुमारं साक्षतफलहस्तम्पूर्वोक्तशुभमुहूर्ते आचार्यपुरुषाः आचार्यसमीपमानयन्ति आचार्यस्तु

पश्चादग्नेः स्वदक्षिणभागे उदङ्मुखमवस्थाप्य तम्ब्रह्मचर्यमागामिति ब्रूहि इति वाचयति कुमारः ब्रह्मचर्यमागामिति वदति आचार्यः ब्रह्मचार्यसानीति ब्रूहि इति वाचयति कुमारः ब्रह्मचार्यसानीति वदति आचार्यः अथैनं वासः येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम् । तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे इति मन्त्रेण परिधापयति माणवको द्विराचामति तत आचार्यो मुञ्जमयीम् त्रिवृताम् यथाप्रवरसङ्ख्यग्रन्थियुतां रशनाङ्कटिदेशे इयन्दुरुक्तम्परिबाधमाना वर्णम्पवित्रम्पुनतीम आगात् । प्राणापानाभ्यांबलमादधाना स्वसादेवीसुभगामेखलेयमिति मन्त्रेण बध्नीते केचि-

दिमम्मन्त्रम्मन्त्रलिङ्गात् माणवकम्पाठयन्ति तत आचार्येण गायत्र्या दशस-
ङ्ख्ययाऽभिमन्त्रिताभिरद्भिरभ्युक्षितं यज्ञोपवीतन्दत्तम्माणवकः यज्ञोपवीत-
म्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात् । आयुष्यमग्र्यम्प्रतिमुञ्च शुभ्रं
यज्ञोपवीतम्बलमस्तुतेजः इति मन्त्रेण धारयति द्विराचामति च तत ऐणे-
यमजिनमाचार्यस्तूष्णीम्प्रयच्छति माणवकः मित्रस्य चक्षुर्धरुणम्बलीय-
स्तेजोयशस्विस्थविरꣳ समिद्धम् । अनाहनस्यं वसनञ्जरिष्णुः परीदं वाज्य-
जिनन्दधेऽहमिति मन्त्रेण धारयति इत्युत्तरीयम् द्विराचामति आचार्यस्तू-
ष्णीन्दण्डम्प्रयच्छति माणवकः यो मे दण्डः परापतद्वैहायसोऽधिभूम्याम् ।

तमहम्पुनराददे आयुषे ब्रह्मणे ब्रह्मवर्चसायेति मन्त्रेण प्रतिगृह्णाति आचार्यस्स्वाञ्जलिस्थाभिरद्भिः आपोहिष्ठा० चक्षसे १ यो वः शिव० मातरः २ तस्माऽअरङ्ग० चनः ३ इति त्रिभिर्मन्त्रैर्माणवकाञ्जलिम्पूरयति सच तूष्णीमूर्द्ध्वमुत्क्षिपति आचार्यः सूर्यमुदीक्षस्व इति प्रेषयति माणवकः तच्चक्षुर्देवहितं० शतात् इति मन्त्रेण सूर्यमुदीक्षते अथाचार्यः मम व्रते ते हृदयन्दधामि मम चित्तमनुचित्तन्ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् इति मन्त्रेण दक्षिणांसं समधिहृदयमालभते अथास्य दक्षिणं हस्तं गृहीत्वाऽऽह को नामासि माणवकः अमुकशर्म्माऽहम् भो ३

इति अथैनमाह कस्य ब्रह्मचार्यसि इति माणवकः भवतः आचार्यः इन्द्र-
स्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तव अमुकशर्मण इति अमुकशा-
र्मन्निति वा पठति अथाचार्यः एनम्भूतेभ्यः परिददाति प्रजापतये त्वा
परिददामि देवायत्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि
द्यावापृथिवीभ्यान्त्वा परिददामि विश्वेभ्यस्त्वाभूतेभ्यः परिददामि सर्वे-
भ्यस्त्वाभूतेभ्यः परिददाम्यरिष्ट्यै इति मन्त्रेण अथ माणवकः प्रदक्षिणम-
ग्निम्परीत्योपविशत्याचार्योत्तरतः अत्र वा पूर्वोक्तन्देवताभिध्यानम् ततो
ब्रह्मवरणादि चरुं विना प्राकृतवत् प्राशनान्ते पवित्राभ्याम्मार्जनम् पवित्र-

प्रतिपत्तिः ब्रह्मन्नुपनयनाङ्गतया विहितमिदम्पूर्णपात्रन्तुभ्यमहं सम्प्रददे ब्रह्मा प्रतिगृह्य द्यौस्त्वेति जपति प्रणीताविमोकः आचार्यः अथैनꣳ सꣳ शास्ति ब्रह्मचार्यसि माणवकः असानि पुनराचार्यः अपोऽशान इति कुमारः अश्नानि आचार्यः कर्म कुरु इति माणवकः करवाणि आचार्यः मा दिवा सुषुप्थाः इति कु० न स्वपानि आचार्यः वाचं यच्छेति कुमा० यच्छानि आचार्यः समिधमाधेहीति कु० आदधानि आचार्यः अपोऽशान इति कुमारः अश्नानि आचार्यः अथास्मै सावित्रीमन्वाहोत्तरतो ऽग्नेः प्रत्यङ्मुखा-योपविष्टाय पादोपग्रहणपूर्वकमुपसन्नाय समीक्ष्यमाणाय आचार्येण

समीक्षिताय संवत्सरे षण्मास्ये चतुर्विꣳशत्यहे द्वादशाहे षडहे त्र्यहे
वा ॥ इति सावित्रीप्रदानकालविकल्पः ॥ सद्यस्त्वेव गायत्रीम्ब्राह्मणायानु-
ब्रूयात् इतरयोस्त्रिवच्छया विकल्पः त्रिष्टुभꣳराजन्यस्य देवसवितः प्रसुव
इति जगतीं वैश्यस्य विश्वारूपाणि प्रतिमुञ्चते कविरिति सर्वेषां वा गाय-
त्रीम् ओङ्कारव्याहृतिपूर्वकम्प्रथमम्पच्छपादम् ततोऽर्द्धर्चशः अर्द्धर्चमर्द्धर्चम्
सर्वाञ्च तृतीयेन सहानुवर्तयन्बटुना ब्रूयात् अत्राग्नौ समिदाधानम् ब्रह्म-
चारिणः तत्र प्रथमम्पाणिनाऽग्निम्परिसमूहति पाणिना दक्षिणेनाऽग्नि-
म्परिसमूहति सन्धुक्षयति वक्ष्यमाणैस्त्रिभिर्मन्त्रैः काष्ठप्रक्षेपेणेतिकारिकाकारः

अग्नेसुश्रवः सुश्रवसम्मा कुरु यथा त्वमग्नेसुश्रवः सुश्रवाऽ अस्येवम्माꣳ
सुश्रवः सौश्रवसङ्कुरु यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि एवमह-
म्मनुष्याणाम्वेदस्य निधिपो भूयासमिति वासुदेवमते तु द्वितीयमन्त्रमध्ये
अस्यान्तद्वयेऽपि प्रक्षेप इति पञ्चभिर्मन्त्रैः पञ्चकाष्ठप्रक्षेपः ततः प्रदक्षिण-
मग्निम्पर्युक्ष्योत्थाय समिधमादाय अग्नये समिधमाहार्षम्बृहते जातवेदसे
यथा त्वमग्ने समिधासमिध्यसऽएवमहमायुषामेधया वर्चसा प्रजयापशु-
भिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरि-
ष्णुर्यशस्वीतेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳ स्वाहा इत्यग्नावादधाति एव-

न्द्वितीयान्तथा तृतीयामनेनैव मन्त्रेण तत उपविश्य पूर्ववत् अग्नेसुश्रवइ-
त्यादिभिर्मन्त्रैः काष्ठप्रक्षेपेण परिसमूहनम् पर्युक्षणञ्च ततस्तूष्णीम्पाणी
प्रतप्य वक्ष्यमाणैरेभिस्सप्तभिर्मन्त्रवाक्यैर्मुखम्विमृष्टे तनूपाऽ अग्नेसि तन्वम्मे
पाहि आयुर्दाऽअग्ने स्यायुर्मे देहि वर्चोदाऽअग्नेऽसिवर्चोमे देहि अग्ने यन्मे
तन्वाऽऊनन्तन्मऽआपृण । मेधाम्मे देवः सविताऽआदधातु मेधाम्मे देवी
सरस्वतीऽ आदधातु मेधामश्विनौ देवावाधत्ताम्पुष्करस्रजौ इत्यङ्गान्या-
लभ्य जपति आदौ सर्वाङ्गान्यालभ्य पश्चात् अङ्गानि चमऽ आप्यायन्ताम्
मुखमालभ्य वाक्चमऽ आप्यायताम् नासापुटे आलभ्य प्राणश्चम आप्याय-

ताम् चक्षुषी आलभ्य चक्षुश्चम आप्यायताम् दक्षिणञ्छ्रोत्रमालभ्य श्रोत्र-
ञ्चम आप्यायताम् वामञ्छ्रोत्रमालभ्य श्रोत्रञ्चम आप्यायताम् यशो बल-
ञ्चम आप्यायताम् इति पाठमात्रम् ततो भस्मना त्र्यायुषञ्जमदग्नेः इति
ललाटे तिलकङ् कुर्यात् कश्यपस्य त्र्यायुषमिति ग्रीवायाम् यद्देवेषु त्र्यायु-
षमिति दक्षिणेंऽसे तन्नोऽअस्तु त्र्यायुषमिति हृदि ॥ अथाभिवादनम् ॥ उप-
मन्युगोत्रः उपमन्युवासिष्ठाभरद्वस्वैन्द्रप्रमदेति त्रिप्रवरः अभिवादये
हरदत्तशर्माऽहम् भो वैश्वानर एवमुपमन्यु० ऽहम्भो वरुण एवमाचार्याभि-
वादनम् चोत्तानाभ्यान्दक्षिणवामहस्ताभ्यान्दक्षिणवामपादौ स्पृष्ट्वा शिरः

पादयोर्निधाय उपमन्युगोत्रः उपमन्युवासिष्ठाभरद्वस्वैन्द्रप्रमदेति त्रिप्र-
वरः अभिवादये हरदत्तशर्म्मा ऽहम्भो ३ आचार्य एवङ्गुर्वादीनप्यभिवाद्या-
नभिवादयेत् गुर्वादिस्तु आयुष्मान्भव सौम्य हरदत्तशर्मन् इति प्रत्यभि-
वादयेत् ॥ अत्रावसरे भिक्षाचर्यम् भिक्षा वृत्तिस्तस्याश्चरणमनुष्ठानम्
यथा दण्डम्प्रतिगृह्य सावित्र्या ऽऽदित्यमुपस्थायाग्निम्प्रदक्षिणीकृत्य प्रथम-
म्मातरम् ॐ भवति भिक्षान्देहि इति भिक्षेत् तया दत्तायाम्भिक्षायाम् ॐ
स्वस्ति इति ब्रूयात् पुरुषन्तु भवन् भिक्षान्देहि इति ब्रह्मचारी क्षत्रियश्चेत्
भिक्षाम्भवति देहि इति वैश्यश्चेत् भिक्षान्देहि भवति इति ॥ तत आचा-

र्याय भैक्ष्यन्निवेदयित्वा तेन भुङ्क्ष्वेत्युक्तस्स्वीकरोति ॥ अहिंसन्स्वय-
म्प्रशीर्णामरण्यात्समिधमाहृत्य तस्मिन्नग्नौ सायं सन्ध्योत्तरम्पूर्ववत्परिस-
मूहनपूर्वकमाधाय त्र्यायुषान्तङ्करोति तत आचार्यो नियमाञ्छ्रावयेत्
ब्रह्मचार्यनुतिष्ठेत् ॥ अधश्शायी स्यात् अक्षारालवणाशी दण्डधारणम्
सायम्प्रातरग्निपरिचरणम् गुरुशुश्रूषा स्वाध्यायाविरोधेन सायम्प्रातर्भि-
क्षाचर्या मधुमाँसम्वर्जयेत् मज्जनम् उपर्यासनम् स्त्रीगमनम् तन्मध्ये ऽव-
स्थानमित्यर्थः । अनृतम् अदत्तादानम् चौर्यमित्यर्थः आवेदसमाप्तेर्ब्रह्म-
चर्यञ्चरेत् शौचा ऽऽचाराँश्च शिक्षयेत् सायं सन्ध्यान्ते आचमनप्राणायाम-

देशकालकीर्तनान्ते परमेश्वरप्रीतये समिदाधानङ्करिष्ये इति सङ्कल्प्य तत्परिसमूहनादि त्र्यायुषान्तङ्कर्तव्यम् तत आपोशानपूर्वकम्प्राङ्मुखो भुङ्क्ते शयानश्चेदाचार्येणाहूत उत्थाय प्रतिशृणुयात् आसीनश्चेत्तिष्ठन् तिष्ठँश्चेदभिक्रामन् अभिक्रामँश्चेदभिधावन् ॥ इति श्री सप्तर्ष्युपाख्यनरहरिभट्टविरचिते संस्कारनृसिंहे उपनयनं समाप्तम् ॥ अथ वेदारम्भः ॥

स च द्वि स्वभावलग्ने स्थिरनक्षत्रवर्जिते उपनयनोक्तमुहूर्ते आचार्यः कृतनित्यक्रियः पञ्चमहायज्ञः कृतनित्यक्रियेण बटुना सहाचमनप्राणायामत्रयदेशकालकीर्तनान्ते ब्रह्मयज्ञादि श्रौताधानद्वारा परमेश्वरप्रीतये अस्य

ब्रह्मचारिणोवेदारम्भनिमित्तं स्वस्तिवाचनम्मातृकापूजनम्वसोर्द्धारापूजन-
मायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थङ्गणेशपू-
जनमहङ्करिष्ये इति सङ्कल्प्य तत्कृत्वा पञ्चभूसंस्कारपूर्वकं लौकिकाग्निस्था-
पनम् पुनर्देशकालौ स्मृत्वा अस्य ब्रह्मचारिणो वेदारम्भमहङ्करिष्ये ॥ अथ
वैकल्पिकानि चतुर्णां वेदानामारम्भः पूर्वेण ब्रह्मणो गमनमित्यादि पूर्ण-
पात्रन्दक्षिणेत्यन्तम्प्राकृतम्भूरादीनामुदुत्तममित्यन्तानाम् ऋष्यादिस्मरणञ्च
अत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अन्तरिक्षम् वायुम् ब्रह्माणम्
छन्दांऽसि पृथिवीम् अग्निम् ब्रह्माणम् छन्दांऽसि दिवम् सूर्यम् ब्रह्मा-

णाम् छन्दांꣳसि दिशः चन्द्रमसम् ब्रह्माणाम् छन्दांꣳसि प्रजापतिम् देवान्
ऋषीन् श्रद्धाम् मेधाम् सदसस्पतिम् अनुमतिम् अग्निम् वायुम् सूर्यम्
अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम् सवितारम् विष्णुम् विश्वा-
न्देवान्मरुतः स्वर्कान् वरुणम् प्रजापतिम् अग्निम् स्विष्टकृतम् एता देवता
अङ्गप्रधानार्थाः आज्येनास्मिन्वेदारम्भाख्ये कर्मण्यहं यक्ष्ये । ब्रह्मवरणादि
चरुं विना आज्यभागान्ते प्राकृतवत् ॐ अन्तरिक्षाय स्वाहा इदमन्तरिक्षाय
नमम वायवे स्वाहा ब्रह्मणे० छन्दोभ्यः० पृथिव्यै० अग्नये ब्रह्मणे० छन्दो
भ्यः० दिवे० सूर्याय० ब्रह्मणे० छन्दोभ्यः० दिग्भ्यः० चन्द्रमसे० ब्रह्मणे०

छन्दोभ्यः० प्रजापतये० देवेभ्यः० ऋषिभ्यः० श्रद्धायै० मेधायै० सदसस्पतये०
अनुमतये० ततो भूरादिस्विष्टकृदन्ताः प्रकृतिवत् संस्रवप्राशनम् पवित्रा-
भ्याम्मार्जनम् पवित्रप्रतिपत्तिः ब्रह्मन्वेदारम्भाङ्गतद्। विहितमिदम्पूर्णपा-
त्रन्तुभ्यमहं सम्प्रददे स च द्यौस्त्वा० प्रणीताविमोकः ॥ ततो गणेशम् सर-
स्वतीम् लक्ष्मीम् नारायणम् विद्याञ्च सम्पूज्य आचार्यः प्रागग्रदर्भोपर्यास-
नोपविष्टः आचम्य प्राणायामत्रयान्ते शीर्षण्याणीन्द्रियाणि दर्भैस्सम्मार्ज्य
प्रत्यङ्मुखायोपविष्टाय समीक्ष्यमाणायोर्द्ध्वजानुद्वयस्थितसंयतहस्तद्वयाय
ओङ्कारव्याहृतिसावित्रीति ब्रह्ममुखमुच्चार्य प्रणवपूर्वकम्वेदादिमारभेत् ब्रह्म-

चार्यधीत्यान्ते च ब्रह्ममुखम्प्रणवम्वोच्चारयेत् आदावन्ते च गुरोः पादोपसङ्ग्रहणङ् कुर्यात् एवम्प्रतिदिनं स्वशाखामधीत्यान्याम्पठेत् मुण्डी जटी वा शिखी वा सन् ॥ इति वेदारम्भः ॥ ब्रह्मचारी ब्रह्मलोपप्रायश्चित्तानि कामतो रेतस्स्कन्दने नैर्ऋतश्चरुः स्वप्ने रेतस्स्कन्दनेन स्नात्वाऽर्कमर्चयित्वाऽग्निप्रतिष्ठापनादि स्विष्टकृदन्ते कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा इदङ्कामाय नमम कामाभिदुग्धोऽस्म्यभिदुग्धोऽस्मि कामकामाय स्वाहा इदङ्कामाय नमम इत्याहुतिद्वयं हुत्वा अथोपतिष्ठते समासिञ्चन्तु मरुतः समिन्द्रः सम्बृहस्पतिः सम्मायमग्निः सवितुः

प्रजया च धनेन च इति त्रिर्जपेत् । उपवीतादिनाशे मनोजूतिरित्याहुतिः सन्ध्याग्निकार्यलोपे अष्टसहस्रगायत्रीजपः गोमणिवस्त्रप्रतिग्रहे च भिक्षा- गुरुशुश्रूषालोपे अष्टशतञ्जपेत् मधुमांसभक्षणे अर्द्धकृच्छ्रम् दण्डोपवीतमे- खलालोपे व्याहृतिभिराज्यहोम इति ॥ अथ केशान्तः ॥ षोडशवर्षे सप्त- दशे चौलोक्तकाले कृतनित्यक्रिय आचार्यः कृतनित्यक्रियेण बटुना सहोप- विश्याचम्य देशकालौ स्मृत्वा अस्य ब्रह्मचारिणः केशान्तकर्म कर्तुन्तद- ङ्गपुण्याहवाचनपूर्वकमविघ्नपूजनम्मण्डपस्थापनम्मातृकापूजनम्वसोर्द्धारापू- जनन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्कृत्वाऽग्निं संस्थाप्य पुनरस्य कुमारस्य के-

शान्तमहङ्करिष्ये इति सङ्कल्प्य चौलवद्विकल्पस्मरणान्ते ऽत्र त्रिरात्रम्ब्रह्म-
चर्यम् चौलवदेव पात्रासादनोपकल्पनीयानि वरस्थाने गौः चौलवत्प्र-
णीताविमोकान्तम् उष्णेन वा य उदकेनेत्यादिते केशान् श्मश्रुवप इत्यूहः
त्रिः क्षुरेण सम्मुखः शिरः परिहरति यत्क्षुरेण म० प्रमोषीर्मुखम् इति वि-
शेषः अन्यत्सर्वञ्चौलवत् ॥ इति केशान्तङ्कर्म ॥ इदमेव गोदानमिति ॥ अथ
ब्रह्मचारी व्रतलोपनिमित्तङ् कृच्छ्रत्रयङ् कृत्वा प्रायश्चित्तहोमङ्करिष्ये इति
सङ्कल्प्यानादिष्टहोमङ् कुर्यात् ततस्समावर्तनङ्कार्यम् ॥ अथ समावर्तनम् ॥
तच्च वेदꣳ समाप्य स्नायात् ॥ ब्रह्मचर्यं वा गुर्वाज्ञया वा उपनयनोक्तकाले

गुरवे दक्षिणान्दत्वा गुरुन्नत्वा स्नास्ये इति पृष्ट्वा स्नाहीत्यनुज्ञाय गुरुः
कृतनित्यक्रियपञ्चमहायज्ञः कृतनित्यक्रियेण ब्रह्मचारिणा सहाऽऽचम्य
प्राणानायम्य देशकालकीर्तनान्ते अस्य ब्रह्मचारिणस्समावर्तनङ्कर्तुन्तदङ्ग-
स्वस्तिवाचनपूर्वकमातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्ध-
ञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थङ्गणेशपूजनमहङ्करिष्ये इति सङ्क-
ल्प्य तत्कृत्वा वस्त्रेण कटादिना वा परिश्रिते परितो वेष्टिते स्थले
कुशोपर्याचार्यः प्राङ्मुख उदङ्मुखब्रह्मचारिणा सहोपविश्य पञ्च भूसं-
स्कारपूर्वकं लौकिकाग्निम्प्रतिष्ठाप्य पुनर्देशकालौ सङ्कीर्त्य अस्य ब्रह्मचा-

रिणः गृहस्थाद्याश्रमप्राप्तिद्वारा परमेश्वरप्रीतये समावर्तनाख्यङ्कर्म करिष्ये
ब्रह्मचारी तु अहं स्नास्य इति सङ्कल्प्य पूर्वेण ब्रह्मणो गमनम् अपरेण
पात्रासादनम् द्वे पवित्रे ताम्रमय्याज्यस्थाली पालाश्यस्समिधः प्राज्ञाघा-
घारौ समिद्धतमे आज्यभागौ पूर्णपात्रन्दक्षिणा गुर्वनुज्ञया समावर्तनम्
दधिप्राशनम् अमौत्रन्धौतं वस्त्रम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये ॐ
भूर्भुवः स्वरित्यादि उदुत्तममित्यन्तानामृष्यादि उपनयनवत्स्मृत्वा स्नाना-
ङ्गहोमे विनियोगः अथ ब्रह्मचारिणो मन्त्राणामृष्यादि अग्ने सुश्रवइत्या-
दीनान्त्र्यायुषान्तमुपनयनवत् अथ येऽप्स्वन्तरित्यस्य प्रजापति० यजुः०

आपो देवता उदकग्रहणे विनियोगः १ तेन मामित्यस्य प्रजा० यजुः०
आपो० अभिषेचने वि० २ येन श्रियमित्यस्य प्रजा० यजुः० आपो० अभि-
षेच० ३ आपो हिष्ठेति तिसृणां सिन्धुद्वीपऋषिः गायत्रीछन्दः आपो देव-
ता अभिषेच० ४ उदुत्तममित्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो दे०
मेखलोन्मोके विनियोगः ५ उद्यन्भ्राजभृष्णुरित्यस्य प्रजा० अतिशक्करी छन्दः
आदित्यो दे० उपस्थाने० ६ अन्नाद्यायेत्यस्य अथर्वणऋषिः अनुष्टुप्० सोमो
दे० दन्तधावने वि० ७ प्राणापानावित्यस्य प्रजा० यजुः० प्राणापानौ देवते
चन्दनोपग्रहणे वि० ८ पितरः शुन्धध्वमित्यस्य प्रजा० यजुः० अश्विसरस्वती-

न्द्रादेवताः पाद्यवनेजनस्य दक्षिणानिषेके वि० ९ सुचक्षा अहमित्यस्य प्रजा० यजुः० आशीर्दैवता जपे वि० १० परिधास्या इत्यस्य आलम्बायनऋषिः पङ्क्तिश्छन्दः वासो देवता वस्त्रपरिधाने वि० ११ यज्ञोपवीतमित्यस्य परमेष्ठीऋषिः त्रिष्टु० लिङ्गोक्तादे० उपवीतधारणे वि० १२ यशासामेत्यस्य अथर्वणऋषिः पङ्क्तिश्छन्दः लिङ्गोक्ता दे० उत्तरीयधारणे वि० १३ या आहरदित्यस्य भरद्वाजऋषिः अनुष्टुप्० सुमनसो० पुष्पग्रहणे वि० १४ यद्यशा इत्यस्य भरद्वाजऋषिः अनुष्टु० सुमनसो दे० पुष्पधारणे विनि० १५ युवासुवासा इत्यस्य विश्वामित्रऋषिः त्रिष्टु० युवोदे० परिव्ययने वि० १६ अल-

ङ्करणमित्यस्य भरद्वाजऋषिः उष्णिक् छ० अलङ्करणन्दैवतम् अलङ्करण-
धारणे वि० १७ वृत्रस्येत्यस्य प्रजा० गायत्री०अञ्जनन्दैवतम् चक्षुरञ्जने वि०
१८ बृहस्पतेच्छादिरित्यस्य गौतमऋषिः त्रिपद्गायत्री छन्दः छत्रन्दैवतम्
छत्रग्रहणे वि० १९ प्रतिष्ठेस्थ इत्यस्य विश्वामित्रऋषिः विराट् छन्दः
लिङ्गोक्तादेवता उपानत्प्रतिमोके वि० २० विश्वाभ्य इत्यस्य याज्ञवल्क्य-
ऋषिः त्रिष्टुप् छन्दः दण्डो दे० दण्डधारणे विनियोगः २१ ॥ अथ देवताभि-
ध्यानम् ॥ अत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अन्तरिक्षम् वायुम्
ब्रह्माणम् छन्दांꣳसि पृथिवीम् अग्निम् ब्रह्माणम् छन्दांꣳसि दिवम् सूर्यम्

ब्रह्माणम् छन्दांꣳसि दिशः चन्द्रमसम् ब्रह्माणम् छन्दांꣳसि प्रजापतिम्
देवान् ऋषीन् श्रद्धाम् मेधाम् सदसस्पतिम् अनुमतिम् अग्निम् वायुम्
सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम् सवितारम् विष्णुम् वि-
श्वान्देवान्मरुतः स्वर्कान् वरुणम् प्रजापतिम् अग्निम् स्विष्टकृतम् एता
देवता अङ्गप्रधानार्था आज्येनास्मिन्समावर्तनाख्ये कर्मण्यहं यक्ष्ये ब्रह्मव-
रणादिपूर्णपात्रान्तानि उपकल्पनीयानि समिन्धनकाष्ठानि षट् दश वा समि-
धस्तिस्रः पर्युक्षणार्थमुदकम् हरिताः कुशाः अष्टावुदकुम्भाः वासोऽन्यत्
दधि नापितः स्नानार्थमुदकम् औदुम्बरन्द्वादशाङ्गुलन्दन्तकाष्ठम् उद्वर्तन-

द्रव्यम् चन्दनम् अहते वाससी यज्ञोपवीते पुष्पाणि उष्णीषम् कर्णवेष्टकौ
अञ्जनम् दर्पणम् नूतनञ्छत्रम् वैणवो दण्डः एतान्युपकल्प्य पवित्रकरणादि-
पवित्रप्रतिपत्त्यन्तम्वेदारम्भवत् ब्रह्मन् समावर्तनाङ्गतया विहितमिद-
म्पूर्णपात्रन्तुभ्यमहं सम्प्रददे स च धौस्त्वा० प्रणीताविमोकः इदम्मात्पूजा
श्राद्धमेतावदाचार्यकर्तृकमिति केचित् गोभिलमते तु सर्वम्ब्रह्मचारीक-
र्तृकमेव तथैव कारिकाकारगङ्गाधराद्यैरङ्गीकृतम् अतः परम्ब्रह्मचार्यस्मिन्ने-
वाग्नौ पूर्ववदग्नेसुश्रव इत्यादि त्र्यायुषान्तङ् कृत्वा परिश्रितस्योत्तरत
उदकपूर्णानष्टौ कुम्भानुदक् संस्थान्निधाय तत्पूर्वतः प्रागग्रेषु हरितेषु कुशेषु

आस्तृतेषु उदङ्मुखः स्थित्वा ब्रह्मचारी गङ्गाधरमते तु प्रत्यङ्मुखस्ति-
ष्ठन् एकस्मात्कुम्भादञ्जलिना ॥ ये ऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो
मयूखो मनोहास्खलो विरुजस्तनूदूषुरिन्द्रियहातान्विजहामि यो रोचन-
स्तमिह गृह्णामि ॥ आपो गृहीत्वा प्राङ्मुखो भूत्वा तेनाञ्जलिस्थोदकेन
तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति । येन श्रियमकृ-
णुतां येनावमृषतांᳬसुरां येनाक्ष्यावभ्यषिञ्चतां यद्वान्तदश्विना यशः इत्य-
भिषिञ्चते एवन्द्वितीयोदकुम्भादञ्जलिनोदकमादाय आपो हिष्ठा० चतसृ
इत्यभिषिञ्चते ततो ये ऽप्स्वन्तरिति तृतीयकुम्भादञ्जलिनोदकमादाय यो.

वः शिव० मातरः इत्यभिषिञ्चते ततश्चतुर्थकुम्भादञ्जलिना जलमादाय तस्मा
अरङ्ग० यथाचनः इत्यभिषिञ्चते तूष्णीमितरैश्चतुर्भिः इति कारिकाकारग-
ङ्गाधरादयः। तत्रापि प्रथमकुम्भाज्जलग्रहणं येऽप्स्वन्तरिति मन्त्रेण इतरेभ्य-
स्सप्तभ्यस्तूष्णीमिति तदाशयः तेषु मन्त्रानुपदेशात् अन्ये तु सर्वेभ्यो
मन्त्रेण जलग्रहणम् तेन मामभिषिञ्चामीति प्रथमोऽभिषेकमन्त्रः येन श्रि-
यमकृणुतामिति द्वितीयः आपोहिष्ठेति तृतीयः योव इति चतुर्थः तस्मा-
अरङ्ग इति पञ्चमः इतरैस्त्रिभिस्तूष्णीमिति ततो मेखलाम् उदुत्तमम्वरुण-
पाशमस्मदवाधमं० स्याम इति शिरोमार्गेणोन्मुच्य दण्डाजिने त्यक्त्वा तूष्णीं

वासोऽन्यत्परिधायाऽऽचम्य आदित्यम् उद्यन्भ्राजभृष्णुरिन्द्रोमरुद्भिरस्थात्प्रा-
तर्यावभिरस्थाद्दशसनिरसिदशसनिम्माकुर्वाविदन्मागमय उद्यन्भ्राजभृष्णु-
रिन्द्रोमरुद्भिरस्थाद्दिवायावभिरस्थाच्छतसनिरसिशतसनिम्माकुर्वाविदन्मा-
गमय उद्यन्भ्राजभृष्णुरिन्द्रोमरुद्भिरस्थात्सायंयावभिरस्थात्सहस्रसनिरसिस-
हस्रसनिम्माकुर्वाविदन्मागमय इत्युपतिष्ठते दधि प्राशयेत् जटालोमनखा-
नि संहृत्य शीतोदकेन स्नात्वा औदुम्बरेण दन्तान् अन्नाद्यायव्यूहध्वꣳ
सोमोराजाऽयमागमत् स मे मुखम्प्रमार्क्ष्यते यशसा च भगेन च धावेत्
तत्काष्ठम्भङ्क्त्वा प्रक्षाल्य प्रागुदग्वा क्षिपेत् मङ्गलोद्वर्तनेन पुनस्स्नात्वोष्णो-

दकेन अनुलेपनम्पाणिभ्यां प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पय
इति नासिकयोर्मुखस्य चोपगृह्णीते पाण्योरवनेजनङ् कृत्वा तदुदकमञ्ज-
लिना प्राङ्मुखः पितरः शुन्धध्वमिति दक्षिणादिशि निषिञ्चेत् अपसव्ये-
नेति वासुदेवः अप उपस्पृश्य चन्दनेनानुलिप्य तूष्णीम्पश्चात्। सुचक्षा
अहमक्षीभ्याम् भूयासꣳसुवर्चामुखेन सुश्रुत्कर्णाभ्याम्भूयासम् इति जपेत्
अहतं वासः। परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि शतञ्जजी-
वामि शरदःपुरूचीरायस्पोषमभिसंव्ययिष्ये इति परिधायाचम्य प्रक्षालित-
म्पूर्वं यज्ञोपवीतञ्जले निक्षिप्यान्यत् यज्ञोपवीतमिति मन्त्रेण धारयेत् आ-

चम्य वा मन्त्रावृत्त्या द्वितीयम्वा अथोत्तरीयम्। यशसामाद्यावापृथिवीयशसे-
न्द्राबृहस्पती यशोभगश्चमाविदद्यशोमाप्रतिपद्यताम्। इति परिधत्ते द्विती-
याभावे पूर्वस्योत्तरवर्गेण यशसामेति उत्तरीयङ् कुर्यात् अथ वा चतुस्त्रि-
ह्यङ्गुलेनोपवीतेनैव वा मन्त्रेणोत्तरीयङ् कुर्यात् द्विराचम्य आचार्यदत्ता-
स्सुमनसः। या आहरज्जमदग्निः श्रद्धायै कामायेन्द्रियाय ता ऽअहम्प्रतिगृ-
ह्णामि यशसा च भगेन च। इति प्रतिगृह्णाति। अथ शिरसि यद्यशोऽप्सरसा-
मिन्द्रश्चकारविपुलम्पृथु तेन सङ्ग्रथिताः सुमनस आबध्नामि यशोमयि
इति बध्नीते। उष्णीषेण शिरः युवासुवासाः परिवीत आगात्स उश्रेयान्भवति

जायमानः तन्धीरासःकवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः इति वेष्ट-
येत् ततस्सौवर्णाङ् कुण्डलन्दक्षिणे कर्णे अलङ्करणमसि भूयोऽलङ्करणम्
भूयात् इति धारयति अनेनैव मन्त्रेण वामकर्णे च ततोऽञ्जनेन वृत्रस्यासि
क० मे देहि इत्यनेन दक्षिणमक्षि अनेनैव वामं तत आत्मानमादर्शे रोचिष्णु-
रसि इति प्रेक्षते। ततः छत्रम् बृहस्पते च्छदिरसि पाप्मनो मामन्तर्द्धेहि तेज-
सो यशसो मामन्तर्द्धेहि इति प्रतिगृह्णाति। अथोपानहौ प्रतिष्ठेस्थोविश्व-
तोमापातमिति युगपत्प्रतिमुञ्चते पादयोः ततो वैणवन्दण्डम् विश्वाभ्योमा-
नाष्ट्राभ्यः परिपाहिसर्वतः इत्यादत्ते दन्तप्रक्षालनादीनि नित्यमपि मन्त्रेण

भवति वासश्छत्रोपानहामपूर्वाणामेव मन्त्राः ततो गुरुस्तं स्नातकञ्चतुरङ्गा-
दितल्पे उपवेश्य चन्दनपुष्पवस्त्रादिना पूजयेत् स च तस्मिन् दिने गुरुस-
न्निधौ वसेत् अथ वा तदनुज्ञया गच्छेत् इति समावर्तनम् ॥ अथास्य स्नातस्य
नियमाः नृत्यगीतवादित्राणि न कुर्यात् अन्यैः क्रियमाणानि न गच्छेत् काम-
ङ्गायति रमते च गीते क्षेमे नक्तङ्ग्रामान्तरन्न गच्छेत् नग्नस्नानविषमलङ्घना-
प्लीक्षवदनसन्ध्योपरक्तवारिस्थादित्येक्षणानि न कुर्यात् न भिक्षेत् वर्षति सति
अयस्मेवज्रः पाप्मानमपहनत् इति मन्त्रेण व्रजेत् अप्रावृतएव अप्स्वात्मान-
न्नावेक्षेत कालेप्यजातलोम्नीं विशेषेण पुरुषाकृतिं स्त्रियं षण्ढञ्च नोपहसेत्

न च गच्छेत् गर्भिणीं विजन्येति ब्रूयात् नकुलन्तु सकुलमिति भगालमिति कपालम् मणिधनुरितीन्द्रधनुः गान्धयन्तीम्परस्मैनाचक्षीत सस्यवत्याम्भूमौ तृणाद्यनन्तर्हितायाञ्च मूत्रपुरीषे न कुर्यात् तथोत्सर्पंस्तिष्ठँश्च न कुर्यात् स्वयम्प्रशीर्णेन काष्ठेन गुदम्प्रमृजीत नील्यादिरक्तन्नाच्छादयीत दृढव्रतस्स्यात् वधात्सर्वान् रक्षेत् सर्वेषाम्मित्रमिव भवेत् एते धर्माः यावज्जीवम् ॥ अथ त्रिरात्रनियमाः अमांसाशी स्यात् मृन्मयपायी स्यात् अवीरायाः स्त्रिया अन्नन्नाद्यात् नापितादेरपि शूद्रस्यान्नम् शवसूतकान्नम् मृतसूतकान्नञ्च क्रीतं लब्धस्वाऽन्नन्तैर्भुज्यते तन्नाद्यात् स्त्रीशूद्रशवकृष्णशकुनिशुनान्दर्शनं सम्भा-

षणाञ्च न कुर्यात् मूत्रपुरीषे ष्ठीवनञ्चातपे न कुर्यात् सूर्यञ्चात्मानन्नान्तर्दधीत छत्रादिना तप्तेनोदकार्थान्कुर्वीत अवज्योत्य दीपादिना रात्रौ भोजनञ्चेत्क्रियते सत्यवदनमेव वा नियमेन कर्तव्यम् नाधस्तना अमांसाशनादयः दीक्षितोऽपि प्रवर्ग्यवांश्चेत् तर्हि आतपादीनि मूत्रपुरीषे ष्ठीवनञ्चातपे न कुर्यादित्यादीनि कुर्यात् इति त्रिरात्रधर्माः वृतस्य ॥ अथ विवाहम्वक्तुन्तदुपयुक्तङ्किञ्चिदुच्यते ॥ अरोगिणीम्भ्रातृमतीमसमानार्षगोत्रजाम् असपिण्डा च या मातुरसगोत्रा च या पितुरित्याद्युक्तेः समानगोत्रां लक्षणालक्षितैकगोत्रां समानप्रवराम्पञ्चानान्त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः

भृग्वङ्गिरोगणेष्वेवम्भृतेभृग्वङ्गिरोगणादित्युक्तप्रवरसमान्नोद्वहेत् तथा पितृमा-
तृसपिण्डाञ्च यथा वरकन्ययोर्मातृद्वारकसम्बन्धे सति वरस्य कन्याया वा
माता चेन्मूलपुरुषात्पञ्चमस्थाने समागता तदा तयोस्सापिण्ड्यनिवृत्तिः पि-
तृद्वारकसम्बन्धे सति वरस्य कन्याया वा पिता चेत्सप्तमस्थाने समागतस्तदापि
तत्सापिण्ड्यनिवृत्तिः तदर्वाक् विवाहो न कार्य एव सापत्नमाता चेत्तयोश्च-
तुर्थस्थानेऽस्ति तदैव सापिण्ड्यनिवृत्तिः तथा असापिण्ड्येऽपि वरवध्वो-
र्मिथः पितृमातृसाम्ये यथा पितृव्यपत्नीभगिनीम्भार्यास्वसुर्दुहितरमित्यादि
नोपयच्छेत् तथा हीनाधिकाङ्गरहिताङ् कुष्ठादिमहादोषवर्जिताम्परिणयेत्

तथैव वरमप्येतैर्दोषै रहितं रूपवन्तम्पण्डितम्प्राज्ञं यत्नात्पुंस्त्वे सुपरीक्षितं
वृणुयात् तत्रापि वर्णैक्ये वरस्योत्तमवर्णे वा परस्परम्भद्दयविवर्जितराशौ
ताराशुद्धौ योनिग्रहमैत्र्यां सद्राशिकूटे एकनाडीहीने मेलके सति सिंहस्थगुरु-
भृग्वस्तबाल्यवृद्धत्वाधिकक्षयमासवर्जितमार्गशीर्षे माघादिचैत्रवर्जितपञ्च-
मासे आषाढस्यापि मिथुनार्कयुक्ताद्यत्रिभागे शुक्ले द्वितीयादित एव कृष्णपक्षे
दशम्यन्तगताश्शुभास्स्युः तास्वष्टमीस्कन्दगणेशदुर्गाचतुर्दशीचापि तिथिर्वि-
वर्ज्यैति। वशिष्ठः मासान्ते पञ्चदिवसान् त्यजेद्रिक्तामसाष्टमीम्। विष्टिञ्च परि-
घस्याद्धं व्यतीपातं सवैधृतमिति नारदश्च॥ शुक्लेतूदयादिषष्ठ्यष्टमीरिक्तावर्जि-

तक्षष्णादशमीपर्यन्ततिथौ अनुकूले चतुर्थाष्टमद्वादशवर्जिते गुरौ चन्द्रसङ्क्रा-
न्तिव्यतीपातवैधृतिपरिघार्द्धभद्रागण्डान्तमहापातरहिते दिवसे ग्रहणोत्पा-
तादिदोषविनिर्मुक्ते क्रूरभोगवेधरहिते उत्तरात्रयरोहिणीमृगमघाहस्तस्वात्य-
नुराधामूलरेवतीनक्षत्रे जन्मलग्नराश्यष्टमराशिविहीने चन्द्रपापरहिते
स्वस्वामिशुभग्रहनिरीक्षितलग्नेंशे च शुभाधिकवर्गे चन्द्रशुक्रवर्जितषष्ठ-
स्थाने क्रूरहीनसप्तमस्थाने शुभभौमवर्जिताष्टमस्थाने चन्द्ररहिते द्वादश-
स्थाने तृतीयशुक्रवर्जिते विषनाडीकुलिकार्द्धयामवीहीने मुहूर्ते कर्त्तव्यतया
विवाहन्निश्चित्य तत्प्राक् पूर्वात्रयकृतिकाश्रवणधनिष्ठासहितविवाहोक्तकाले

कुमारीं वरञ्च वृणुयात् तद्यथा द्वौ चतस्रोऽष्टौ वा प्रशस्तवेशास्तावतीभिः पुरन्ध्रीभिश्शकुनपूर्वकम् मङ्गलगीतवाद्यैः कन्यागृहमेत्य शुभे सवस्त्रपीठे प्राङ्मुखीं सालङ्कारां सुवेशाङ्कन्यामुपवेश्य तद्धस्ते फलताम्बूलादि दत्वा कन्यावामभागे तत्पित्रादिरुपविश्य तत्पुरत उदङ्मुखो वरपित्रादिः उभावपि श्रीगणपत्यादिस्मरणपूर्वकन्देशकालौ सङ्कीर्त्य एवङ्गुणविशिष्टे काले कन्यावरणमहङ्करिष्य इति सङ्कल्प्य इति वरपित्रादिः कन्यादाता तु करिष्यमाणमुख्यब्राह्म्यविवाहाङ्गभूतस्वाग्दानमहङ्करिष्ये इति सङ्कल्प्य तत्र निर्विघ्नतासिध्यर्थङ्गणेशपूजनङ्कलशपूजनञ्च करिष्ये यथोक्तम्पूजनङ् कृत्वा ब्राह्म-

णाँश्च गन्धाक्षतैस्सम्पूज्य वरपित्रादिः अदकगोत्रायादकप्रवरायादकप्रपौत्राया-
दकपौत्रायादकपुत्रायादकनाम्ने वराय अदकगोत्रामदकप्रवरामदकप्रपौत्रीम-
दकपौत्रीमदकपुत्रीमदकनाम्नीङ्कन्याम्भार्यात्वाय वृणीमहे इति ब्रूयात् दाता
वृणीध्वमिति प्रतिवदेत् एवं पुनर्द्विः दाता पुनः प्रदास्यामीति त्रिरुच्चैर्वदेत्
ततो वरपित्रादिः गन्धपुष्पवस्त्रालङ्कारैः कन्याम्पूजयेत् ततो दाता गन्धा-
द्यैर्वरपित्रादिकम्पूजयेत् स च दातारम्। ततो दाता हरिद्राखण्डपञ्च दृढ-
पूगीफलगन्धाक्षतानि गृहीत्वा अदकगोत्रायादकप्रवरायादकप्रपौत्रायादक-
पौत्रायादकपुत्रायादकशर्मणे वराय अदकगोत्रामदकप्रवरामदकप्रपौत्रीम-

दकपौत्रीमदकपुत्रीमदकनाम्नीमिमाङ्कन्याम् ज्योतिर्विदादिष्टे मुहूर्ते प्रदास्ये इति वाचा सम्प्रददे इत्युक्त्वा। अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते इमाङ्कन्याम्प्रदास्यामि देवाग्निपितृसन्निधौ । इत्युच्चार्य वरपित्रादिः वस्त्रप्रान्ते तानि प्रक्षिपेत् सच मनोजूतिरिति मन्त्रेण बध्वा गन्धाक्षतैः पूजयित्वा स्वयञ्च हरिद्राखण्डपञ्चपूगाक्षतानि गृहीत्वा अदकगोत्रायादकप्रवरायादकप्रपौत्रायादकपौत्रायादकपुत्रायादकनामकवरविषये भवन्तो निश्चिता भवन्तु इति दातृवस्त्रप्रान्ते प्रक्षिपेत् स च मनोजूतिरिति बध्वा सम्पूज्य। वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया। कन्यावलोकनविधौ निश्चितस्त्वं

सुखी भव इति वदेत् वरपिता तु वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया वरावलोकनविधौ निश्चितस्त्वं सुखी भव इति तम्प्रति वदेत् भ्रात्रादौ स्वीकारे भ्रात्रर्थमित्यूहः ततो ब्राह्मणाः शिवा आपः सन्तु सौमनस्यमस्तु अक्षतञ्चारिष्टञ्चास्तु दीर्घमायुश्शान्तिः पुष्टिस्तुष्टिश्चास्तु एतद्वस्सत्यमस्तु इति पठेयुः दाता पात्रस्थतण्डुलेषु प्राचीम् अदित्यै रास्नासीन्द्रा० यदीष्वेति मन्त्रेणावाह्य सम्पूजयेत् ताङ्कन्याम् देवेन्द्राणिनमस्तुभ्यन्देवेन्द्रप्रियभामिनि विवाहम्भाग्यमारोग्यम्पुत्रलाभञ्च देहि मे १ धान्यन्देहि धनन्देहि पशून्देहीन्द्रभामिनि यशो देहि सुखन्देहि सर्वकार्यकरी भव २ इति प्रार्थयेत् ततः

पतिपुत्रवतीभिर्नीराजनङ्कार्यम् ॥ ताम्बूलदक्षिणाभिस्सन्तोषिताविप्राः श्री-
श्चते लक्ष्मीश्चेत्याद्याशिषो मनोजूतिरित्याद्याश्च पठेयुः । इति वाक्दानम् ।
तदनन्तरं विवाहात्प्राक् दशमदिनमारभ्य नवमषष्ठतृतीयदिवसवर्जिते वि-
वाहोक्ते नक्षत्रादौ गणपत्यादिपूजनपूर्वकम् अस्या कन्यायास्तैलहरिद्रारो-
पणमण्डपवेदिनिर्माणमहङ्करिष्ये इति सङ्कल्प्य कन्यापित्रादिना कार्यम्
अस्य वरस्य तैलहरिद्रारोपणादि करिष्ये इति वरपित्रादिना ततो वशि-
ष्ठेनोक्तम् षोडशारत्निकङ् कुर्याच्चतुर्द्वारोपशोभितम् मण्डपन्तोरणैर्युक्तन्तत्र
वेदीम्प्रकल्पयेत् अष्टहस्तन्तु रचयेन्मण्डपं वा द्विषट्करम् । नारदः हस्तो-

च्छ्रितांश्चतुर्हस्तैश्चतुरस्रां समन्ततः स्तम्भैश्चतुर्भिस्सुश्लक्ष्णैर्वामभागे स्वसद्मनः १ समण्डपाञ्चतुर्दिक्षुसोपानैरतिशोभिताम्। प्रागुदक् प्रवणां रम्भास्तम्भहंस-शुकादिभिः २ विचित्रिताञ्चित्रकुम्भैर्विविधैस्तोरणाङ्कुरैः। भृङ्गारपुष्पनिकरै-र्वर्णकैस्समलङ्कृताम् ३ विप्राशीर्वचनैः पुण्यस्त्रीभिर्द्दीपैर्मनोरमाम्। वादित्र-नृत्यगीताद्यैर्हृदयानन्दिनीं शुभाम्। एवम्विधामारुरुक्षेन्मिथुनं साग्निवेदि-काम्। एवं यथाशक्ति शोभितम्मण्डपम्वेदिकाञ्च विधाय कन्यापिता वि-वाहात्पूर्वदिने सपत्नीकः कृतमङ्गलवेषभूषितो मण्डपे शुभासने प्राङ्मुख उपविश्य स्वदक्षिणे पत्नी तद्दक्षिणे कन्याञ्चोपवेश्याचम्य प्राणायामत्रयान्ते

ॐ श्रीमन्महागणपतये नमः श्रीलक्ष्मीनारायणाभ्यान्नम इत्यादि देशकालकी-
र्तनान्ते अस्याः मम कन्याया अमुकनाम्न्याः श्वः करिष्यमाणविवाहाङ्गभूतं
स्वस्तिवाचनपूर्वकमविघ्नपूजनम्मण्डपदेवतापू० मातृकापू० वसोर्द्धारापू०
आयुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये इति सङ्कल्प्य तानि क्रमेण कुर्यात्
एवं वरपिताऽपि गणपत्यादिस्मरणपूर्वकम्प्राणायामादिदेशकालकीर्तनान्ते
अस्य मम पुत्रस्यामुकशर्मणः श्वो विवाहङ्करिष्ये तदङ्गभूतं स्वस्तिवाचनपू-
र्वकमित्यादि सङ्कल्प्य तानि कुर्यात् ग्रामान्तरे वधूश्चेत् तत्र गत्वैतत्का-
र्यम् । ततो वरः कृतकौतुकमङ्गलचारुभूषणवेषो यथा विभवमश्वादियानेन

श्रुतिवाद्यैर्घोषैर्वधूगृहमागच्छेत् तद्गृहद्वारि यथाचारम्पतिपुत्रवतीभिर्वधू-
मात्रा च नीराजनाक्षतारोपणादिभिस्संस्कृतोऽन्तः प्रविश्य भद्रासने सुव-
स्त्रास्तीर्णे प्राङ्मुख उपविशेत् कन्यापिता तत्पुरतस्तद्दक्षिणतस्तत्पत्नीचो-
पविशति अन्ये तत्पुरुषाः पञ्चविंशतिकुशमयौ प्रादेशमात्रौ त्रिवृतौ द्वौ
कुशविष्टरौ विमलदूर्वाक्षतयुतमर्घपात्रं सुखोष्णाङ्घ्रिप्रक्षालनजलमाचम-
नार्थम् शीतलञ्जलम्मधुपर्कन्दधिमधुघृतमपिहितङ् कांस्येकांस्येन वस्त्र-
द्वयम् यज्ञोपवीतञ्चन्दनम्पुष्पाणि अलङ्करणानि एतान्याहरन्ति अथ
कन्यापिता आचमनप्राणायामत्रयदेशकालकीर्तनान्ते अस्या अमुकनाम्न्याः

कन्याया अद्यविवाहङ्करिष्ये तत्र गृहागताय स्नातकाय वराय कन्यादा-
नाङ्गभूतम्मधुपर्कङ्करिष्य इति सङ्कल्पयेत् तत्र वरेण यन्मधुन इति मधुप-
र्कप्राशनम्। भक्षितशेषस्य प्रागसञ्चरे निनयनम्। इति वैकल्पिकावधार-
णङ्कर्त्तव्यम् ॥ अथर्ष्यादि च स्मर्तव्यम् वर्ष्मोऽस्मीति मन्त्रस्याथर्वणऋषिः अ-
नुष्टुप्० विष्टरो दे० विष्टरोपवेशने वि० १ विराजोदोहोऽसीत्यस्य प्रजा० यजुः०
आपो दे० पादप्रक्षालने विनियोगः २ आपःस्थ इत्यस्य प्रजा० यजुः आपो
देव० अर्घग्रहणे वि० ३ समुद्रम्व इत्यस्य आथर्वणऋ० अनुष्टुप्० आपो०
अभिमन्त्रणे वि० ४ आमागन्नित्यस्य परमे० बृहती० आपो दे० आचमने

वि० ५ मित्रस्यत्वेत्यस्य बृहस्पति० यजु० मधुपर्कौ दे० मधुपर्कावेक्षणे वि० ६ देवस्यत्वेत्यस्य प्रजा० गायत्री० सविता० मधुपर्कग्रहणे विनि० ७ नमश्श्यावास्येत्यस्य प्रजा० यजु० सविता० मधुपर्कलोडने वि० ८ यन्मधुन इत्यस्य कुत्सऋषिः जगती० मधुपर्कौ दे० मधुपर्कप्राशने विनि० ९ परिधास्या इत्यस्य आलम्बायन० पङ्क्तिः० वासो देवता वस्त्रपरिधाने वि० १० यज्ञोपवीतमित्यस्य परमेष्ठीऋषिः त्रिष्टुप्छं० लिङ्गोक्तादे० यज्ञोपवीतधारणे वि० ११ यशसामेत्यस्याथर्वणऋ० पङ्क्तिः० लिङ्गोक्तादे० उत्तरीयपरिधाने० १२ सुचक्षा अहमित्यस्य प्रजा० यजुः० आशीर्दे० जपे वि० १३ या आहरदित्यस्य भरद्वा०

अनुष्टु० सुमनसो दे० पुष्पग्रहणे विनियो० १४ यद्यश इत्यस्य विश्वामित्र० त्रिष्टुप्० सुमनसो दे० पुष्पधारणे विनियो० १५ अलङ्करणमित्यस्य भरद्वाज० उष्णिक्० अलङ्करणन्दैवतं अलङ्करणधारणे विनि० १६ इत्यृष्यादि स्मृत्वा ततो वधूपिता आसनस्य पश्चादवस्थितम्वरम्प्रति साधुभवानास्तामर्च्चयिष्यामो भवन्तमित्याह वरः ॐ अर्चय इति प्रत्याह ततोऽन्यः कश्चित् विष्टरो विष्टरो विष्टर इति प्राह कन्यापित्रा तिष्ठता प्रतिगृह्यतामिति निवेदितम् विष्टरन्तूष्णीम्वरः प्रतिगृह्य आसन उदगग्रन्निधाय वर्ष्मोऽस्मि समानानामुद्यतामिवसूर्य्यः इमन्तमभितिष्ठामि योमाकश्चाभिदासति इत्येनम-

भ्युपविशति एवमन्यः पादार्थमुदकम्पादार्थमुदकम्पादार्थमुदकमिति प्राह कन्यापित्रा प्रतिगृह्यतामिति निवेदितं वरः प्रतिगृह्य विराजोदोहोऽसि विराजोदोहमशीय मयि पाद्यायै विराजोदोह इति दक्षिणम्पादम्प्रक्षाल्यानेनैव मन्त्रेण सव्यम्प्रक्षालयति ब्राह्मणश्चेत्। क्षत्रियवैश्यौ तु सव्यम्पादम्प्रक्षाल्य दक्षिणम्प्रक्षालयतः। अथान्यो विष्टर इति त्रिःप्राह कन्यापित्रा प्रतिगृह्यतामिति निवेदितं द्वितीयम्विष्टरम्वरः प्रतिगृह्यासनाधस्तादुदगग्रम्भूमौ निधाय वर्ष्मोऽस्मीति मन्त्रेण तस्योपरि पादौ निदधाति अन्यः अर्घोऽर्घोऽर्घः दात्रा प्रतिगृह्यतामिति निवेदितमर्घं वरः आपः स्थ युष्माभिः सर्वान् कामान-

वाप्नवानीति प्रतिगृह्णाति । तम्मूर्द्ध्नाऽभिवन्द्य प्रागुदग्वा निनयन्नभिमन्त्रयते समुद्रम्वः प्रहिणोमि स्वां योनिमभिगच्छत अरिष्टाऽस्माकं वीरामापरासेचिमत्पय इति अन्य आचमनीयमाचमनीयमाचनीयमिति प्राह दात्रा प्रतिगृह्यतामिति निवेदितं वरस्तूष्णीम्प्रतिगृह्य आमागन्यशसा सꣳसृज वर्चसा तम्माकुरु प्रियम्प्रजानामधिपतिम्पशूनामरिष्टिन्तनूनामित्याचामति अन्यः मधुपर्क्को मधुपर्क्को मधुपर्क्कः दात्रा प्रतिगृह्यतामिति निवेदितं मधुपर्क्कङ्किञ्चिदुद्घाटितन्दातृहस्तस्थं वरः मित्रस्य त्वा चक्षुषा प्रतीक्षे इति प्रतीक्षते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यामिति प्रति-

गृह्णाति सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया नमश्च्यावास्यायान्नशने यत्त आविद्धन्तत्ते निष्कृन्तामि इति प्रदक्षिणम्प्रयौति अनामिकाङ्गुष्ठाभ्यां त्रिर्निरुक्षयति प्रागुदग्वा एवमपरम्वारद्वयन्निरुक्षणञ्च प्रतिप्रयवणम्मन्त्राभ्यासः पात्रं भूमौ निधाय तस्यानामिकाङ्गुष्ठाभ्यामेव यन्मधुनोमधव्यम्परमꣳरूपमन्नाद्यम् । तेनाहम्मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमोमधव्योऽन्नादोऽसानीति मन्त्रावृत्त्या त्रिः प्राश्नाति शेषम्प्रागसञ्चरे निनयेत् द्विराचम्य प्राणान्सम्मृशति जलेन सम्मृशति यथा मन्त्रलिङ्गम् । वाङ्म आस्येऽस्तु इति मुखम् ॥ नसोर्मे प्राणोऽस्तु इति नासिकाद्वयम् ॥ अक्ष्णोर्मे चक्षु-

रस्तु इत्यक्षिद्वयम् ॥ कर्णयोर्मे श्रोत्रमस्तु इति दक्षिणकर्णमनेनैव वामकर्णम् । बाह्वोर्मे बलमस्तु इति दक्षिणबाहुमनेनैव वामम् । ऊर्वोर्म ओजोऽस्तु इति दक्षिणोरुमनेनैव वामम् । अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु इति सर्वाङ्गानि संस्पृशेत् । अत्राचान्तोदकायेति सूत्रात्पुनराचमनङ्केचिदिच्छन्ति ततः कन्यापित्रा दत्तम्वासो वरः परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि शतञ्च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्य इति परिधत्ते ततस्तद्दत्तं यज्ञोपवीतम् ॥ यज्ञोपवीतम्परमम्पवित्रं० मस्तुतेज इति परिधत्ते तथा तद्दत्तमुत्तरीयं यशसामाद्यावापृथिवी यशसेन्द्राबृहस्पती

यशो भगश्च माविदद्यशो माप्रतिपद्यतामिति धारयति द्विराचामति च कन्यापित्रा दत्तञ्चन्दनम्भालेऽनुलिप्य पश्चात् सुचक्षा अहमक्षीभ्याम्भूयासꣳ सुवर्चामुखेन सुश्रुत्कर्णाभ्याम्भूयासमिति जपति कन्यापित्रा निवेदितानि पुष्पाणि वरः या आहरज्जमदग्निश्श्रद्धायै कामायेन्द्रियाय ता अहं प्रतिगृह्णामि यशसा च भगेन च इति प्रतिगृह्णाति यद्यशोऽप्सरसामिन्द्रश्चकार विपुलम्पृथु तेन सङ्ग्रथिताः सुमनस आबध्नामि यशो मयि इति बध्नीते कन्यापित्रा दत्तङ्कुण्डलाद्यलङ्करणम्वरः अलङ्करणमसि भूयोऽलङ्करणम्भूयादिति धारयति ततो वरो वेद्याम्परिसमूहनादिसँस्कारपूर्वकं लौकिकाग्निं

संस्थाप्याचम्य प्राणानायम्य देशकालकीर्तनान्ते अस्मिन्पुण्याहे धर्मार्थ-
कामप्रजासिद्ध्यर्थन्दारपरिग्रहणमहङ्करिष्ये इति सङ्कल्प्य लौकिकाग्नेस्स्था-
पनम् गौरीपरिणयनम् कुमार्या वस्त्रपरिधानादि गृहमध्ये अग्नेरुत्तरतः
कुम्भधृक् तेजन्यान्दक्षिणपादेन परिवर्त्तनम् पूर्वेण ब्रह्मणो गमनम् अपरेण
पात्रासादनम् द्वे पवित्रे ताम्रमय्याज्यस्थाली पालाश्यस्समिधः प्राङ्घावा-
घारौ विदिशावाज्यभागौ वरोदक्षिणा राष्ट्रभृद्धोमः जयाहोमः अभ्यातान-
होमः सुगन्नुपन्थामित्याहुत्यन्ते परम्मृत्य इत्याहुतिः बध्वा आनडुहचर्मोप-
वेशनम्प्राच्याम् त्रिरात्रम्ब्रह्मचर्यम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये अथ-

र्ष्यादि जराङ्गच्छेत्यस्य प्रजापतिऋषिः त्रिष्टुप् छन्दः वासो देवता कन्याव-स्त्रपरिधाने विनियोगः १ याअकृन्तन्नित्यस्य प्रजापतिऋषिः गायत्री० वासो० उत्तरीयपरिधाने विनि० २ समञ्जन्त्वित्यस्य आथर्वणऋ० अनुष्टुप्छन्दः लि-ङ्गोक्ता० समञ्जने वि० ३ यदैषीत्यस्य आथर्व० अनु० लिङ्गो० निष्क्रमणे वि-नि० ४ अघोरचक्षुरित्यादिचतुर्णाम्प्रजा० आद्यन्तयोस्त्रिष्टुप् मध्यमयोरनुष्टुप्० कुमारीदेवता० परस्परावेक्षणे विनि० ५ भूर्भुवः स्वरिति महाव्याहृतीनां प्रजा० क्रमेण गायत्र्युष्णिगनुष्टुप्छन्दांसि० अग्निवायुसूर्यादेवता होमे वि० त्वन्नोअग्ने सत्वन्नोअग्ने अयाश्चाग्ने येतेशतमिति मन्त्राणाम्वामदेव-

ऋषिः त्रिष्टुप्छन्दः अग्नीवरुणौ देवते प्रथमयोः तृतीयस्याग्निर्दैवता
चतुर्थस्य वरुणस्सविताविष्णुर्विश्वेदेवामरुतस्स्वर्क्कादेवताः उदुत्तममित्यस्य
शुनश्शेपऋ० त्रिष्टु० वरुणो देवता सर्वेषां होमे वि० राष्ट्रभृद्द्वादशानाम्म-
न्त्राणाम्प्रजा० सर्वाणियजूंषि० लिङ्गोक्ता० होमे वि० जयात्रयोदशमन्त्रा-
णाम्परमेष्ठि० उक्ताछं० अन्त्यस्य त्रिष्टु० लिङ्गोक्ता० होमे वि० अभ्यातानाना-
न्ष्टाविंशतिमन्त्राणाम्प्रजा० त्रिष्टुप्० लिङ्गोक्ता० होमे वि० परमृत्य इति
मन्त्रस्य सङ्कुसुकऋ० त्रिष्टुप्० मृत्युर्दैवता होमे वि० अर्यमणमित्यादित्रया-
णाङ्कुमारीमन्त्राणामाथर्वणऋ० अनुष्टुप्छन्दः अग्निर्दैवता लाजाहोमे वि०

गृभ्णामि त इत्यादिचतुर्णाङ्क्रमेण याज्ञवल्क्यभारद्वाजाथर्वणप्रजापतिऋ-
षयः त्रिष्टुबुष्णिगनुष्टुप्छन्दोहीनानि भगाद्यादेवताः पाणिग्रहणे विनियोगः
आरोहेममित्यस्याथर्वणऋषिः अनुष्टुप्० वधूर्देवता दृषदारोहणे वि० सरस्वति
प्रेदमित्यस्य विश्वावसुऋ० अनुष्टुप्० सरस्वतीदेव० गाथागाने वि० तुभ्यम-
ग्नइत्यस्याथर्व० अनु० अग्निर्दे० परिक्रमणे वि० आपःशिवा इत्यस्य प्रजा०
यजुः लिङ्गो० मूर्द्धाभिषेके विनियोगः आपोहिष्ठेति तिसृणां सिन्धुद्वीपऋ०
गायत्री० आपोदे० अभिषे० तच्चक्षुरित्यस्य दध्यङ्ङाथर्वणऋ० पुर उष्णिक्०
सूर्यो दे० सूर्यावेक्षणे वि० ममव्रत इत्यस्य प्रजा० त्रिष्टु० प्रजापतिर्दे० हृद-

यालम्भने वि० सुमङ्गलीरित्यस्य प्रजा० अनु० लिङ्गोक्ता० अभिमन्त्रणे वि० इहगाव इत्यस्य प्रजा० अनु० लिङ्गोक्ता० उपवेशने वि० ध्रुवमसीत्यस्य प्रजा० पङ्क्तिः० लिं० ध्रुवावेक्षणे वि० इत्यृष्यादि स्मृत्वा ततो वरो दैवज्ञं सम्पूज्य तद्दत्ताक्षतफलाञ्जलिर्वादित्रश्रुतिमन्त्रघोषैरन्तः प्रविश्योभयत्र स्वस्तिकाङ्कितोदकुदशाधृतपटाद्बहिर्भागे प्रत्यङ्मुखो लक्ष्मीनारायणञ्चिन्तयन् तिष्ठन् स्वकन्याऽपि सुस्नाता परिहिताहतवस्त्रा सूत्रवेष्टितोपलदृषदोपरि हरिद्रानिर्मितगौरीहरौ सम्पूज्य इन्द्राणीञ्चाक्षतपुञ्जेषु सम्पूज्य देवीन्द्राणि नमस्तुभ्यन्देवेन्द्रप्रियभामिनि विवाहम्भाग्यमारोग्यम्पुत्रलाभञ्च देहि मे धा-

न्यन्देहि धनन्देहि पशून्देहीन्द्रभामिनि यशो देहि सुखन्देहि सर्वकार्यकरी भवेति सम्प्रार्थ्य साक्षतफलहस्ता पटान्तर्भागे प्राङ्मुखी तिष्ठन्ती दैवज्ञ-पठितमङ्गलपद्यपठनान्ते तदेवलग्नान्ते च ॐ प्रतिष्ठेत्युक्ते उत्तरतः पटेऽपसारितेऽन्योन्यमस्तकोपर्यञ्जलिस्थाक्षताः प्रक्षेप्तव्याः वरः अथैनाम्वासः जराङ्गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा शतञ्चजीवशरदः सुवर्चा रयिञ्च पुत्राननु संव्ययस्वायुष्मतीदम्परिधत्स्ववास इति परिधापयति अथोत्तरीयम् या अकृन्तन्नवयं या अतन्वत याश्चदेवीस्तन्तूनभितोततन्थ तास्त्वादेवीर्जरसेसंव्ययस्वायुष्मतीदम्परिधत्स्ववास इति परिधापयति

कन्यापिता परस्परंसमञ्जेथामित्यध्येषयति ततो वरेण समञ्जन्तु विश्वेदेवाः समापो हृदयानिनौ सम्मातरिश्वासन्धातासमुदेष्ट्रीदधातुनौ इति पठितेन वधूवरौ समञ्जच्छतः गत्वा च प्राङ्मुखोवरः प्रत्यङ्मुखीकन्या चोपविशति अथ कन्यापिता तद्दक्षिणतः स्वदक्षिणतः पत्न्यासहोदङ्मुखोपविष्टः शुचिराचान्तः पवित्रपाणिः कृतप्राणायामत्रयः अद्येत्यादि देशकालकीर्त्त-नान्ते मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादि कन्यादान-कल्पोक्तफलावाप्तये अनेन वरेण अस्याङ्कन्यायामुत्पादयिष्यमाणसन्तत्या द्वादशावरान्द्वादशपरान्पुरुषाँश्च पवित्रीकर्त्तुमात्मनश्च श्रीलक्ष्मीनारायण-

प्रीतये ब्राह्म्यविवाहविधिना कन्यादानमहङ्करिष्ये इति साक्षतकुशजलेन सङ्कल्प्य वधूवरपुरतो नूतनकाँस्यपात्रन्निधाय वध्वञ्जल्युपरि वराञ्जलौ शिवाश्चापस्सन्तु इति जलन्दत्वा सौमनस्यमस्तु इति पुष्पाणि अक्षतञ्चारिष्टञ्चास्तु इति यवान् यच्छ्रेयस्तदस्तु यत्पापन्तत्प्रतिहतमस्तु दीर्घमायुश्शान्तिः पुष्टिस्तुष्टिश्चास्तु इति कुशाक्षतजलन्दत्वा उपमन्युगोत्रस्य उपमन्युवासिष्ठाभरद्वस्वैन्द्रप्रमदेति त्रिप्रवरस्य विश्वनाथशर्मणः प्रपौत्राय कोनेरशर्मणः पौत्राय नरहरिशर्मणः पुत्राय उपमन्युगोत्राय उपमन्युवासिष्ठाभरद्वस्वैन्द्रप्रमदेति त्रिप्रवराय यजुर्वेदान्तर्गतवाजसनेयशाखाध्यायिने हरदत्तशर्मणे

ब्राह्मणाय वराय कन्यार्थिने काश्यपगोत्रस्य काश्यपावत्सारनैध्रुवेतित्रिप्र-
वरस्य मुद्गलशर्मणः प्रपौत्रीं शामशर्मणः पौत्रीं गदाधरशर्मणः पुत्रीं का-
श्यपगोत्रां काश्यपावत्सारनैध्रुवेतित्रिप्रवरां वेणीनाम्नीं गौरीमिमाङ्कन्यां
यथाशक्त्यलङ्कृतांप्रजापतिदैवतां शतगुणीकृतज्योतिष्टोमातिरात्रशतफ-
लकामः दशसहस्रधूर्यवाजिसुपात्रार्पणफलकामो वा भार्यात्वाय तुभ्यमहं
सम्प्रददे इत्युक्त्वा अविछिन्नभार्यापातितजलधारया सकुशाक्षततुलसीपत्र-
ङ्कन्यादक्षिणहस्तम्वरदक्षिणहस्ते विश्वेश्वरञ्चिन्तयन् विश्वेश्वरः प्रीयतामिति
दद्यात् वरः स्वस्तीति ब्रूयात् कन्यादत्तांसं स्पृशन् द्यौस्त्वा ददातु पृथ्वी त्वा

प्रतिगृह्णातु इतिमन्त्रेण प्रतिगृह्णीयात् कन्यापिता यस्त्वया धर्मश्चरितव्यस्सो
ऽनया सह धर्मंचार्थंच कामंच त्वयेयन्नातिचरितव्येतिवरम्ब्रूयात् वरः नाति-
चरामीत्युक्त्वा कोऽदात्कस्माऽअदात्कामैतत्ते इति कामस्तुतिम्पठेत् एवमेव
पुनर्वारद्वयङ्गोत्रोच्चारणादिकामस्तुत्यन्तङ्कर्तव्यमिति सम्प्रदायः ततः कन्या-
पिता कृतैतत्कन्यादानप्रतिष्ठासिद्ध्यर्थं सुवर्णङ्गोमिथुनञ्च तुभ्यमहं सम्प्रददे
इति दक्षिणान्दत्वा नममेति वदेत् तथा यथाविभवम्महिष्यश्वदास्युपकरणं
सङ्कल्पपूर्वकन्दद्यात् तत्र यज्ञसाधनभूतायाविश्वस्याघप्रणाशिनी विश्वरू-
पधरो देवः प्रीयतामनया गवेति गोदानमन्त्रः ततः पुरोहितादिर्द्विगुणित-

शुक्लसूत्रेण दुग्धाक्तेन दम्पती कन्यादत्तांसमीशानमारभ्य कण्ठदेशे कटिदेशे चतुर्वारम्पञ्चवारम्वा परित्वागिर्वणोगिरइमा० जुष्टय इति मन्त्रेण वेष्टयेत् अत्र वैदिकाः सयः कामयेतेत्यादि पठन्ति तदत्यन्तमनुचितम् तस्य वृहदा-रण्यगतत्वेनारण्येनूचमानत्वात् गृहेमङ्गलमध्ये रात्र्यादावशुचिभिः पठन-निषेधात् श्रुतिवाक्यादिप्रमाणैरविनियुक्तत्वात् प्रयोगप्राशुभावपिघाताच्च अन्यदविरुद्धम्वृद्धसम्मतङ्कर्त्तव्यम् । यथाऽत्रमिलितादम्पत्योस्सुलग्नमस्तु दम्पत्योरविच्छिन्ना प्रीतिरस्त्वित्याशीर्वचनेन शिरस्यक्षतनिक्षेपणपूर्वकम्पु-रस्स्थापितकाँस्यपात्रे दक्षिणादानम् ततः कण्ठस्थसूत्रमधो निष्काश्य कुङ्कु-

माक्ते तस्मिन्नूर्णासूत्रं हरिद्राखण्डञ्च बध्वा वधूवामप्रकोष्ठे वरो यदाब-
ध्नन्दाक्षा॰ यथासमिति मन्त्रेण बध्नीयात् कटिदेशस्थसूत्रमूर्द्धन्निष्काश्य
तथैव वरदक्षिणप्रकोष्ठे वधूर्बध्नीयात् वरस्तु प्रोतसूक्ष्मकाचमणिसूत्रम्वधू-
कण्ठे । माङ्गल्यतन्तुनाऽनेन भर्तृजीवनहेतवे कण्ठे बध्नामि सुभगे सञ्जीव
शरदःशतमिति बध्नाति वधूवरौ गौरीहराविन्द्राणीञ्च नमस्कुर्वीताम् वधू-
स्तत्र लिखिताम्रवृक्षस्य दुग्धेन सेचनङ् कुर्यात् वरः एवम्पित्रा प्रत्तामादाय
वामहस्ते गृहीत्वा यदैषिमनसा दूरन्दिशोनुपवमानोवा हिरण्यपर्णोवैकर्ण-
स्सत्वामन्मनसाङ्करोतु वेणीनाम्नीं इति वधूनामग्रहणान्तमन्त्रेण गृहान्निष्का-

मति ताभ्यां सहान्यो द्विजः प्रशस्तताम्रादिपल्लवदूर्वाङ्कुरउदकुम्भं स्क-
न्धे कृत्वा निष्क्रम्योत्तरतोऽग्नेर्वाग्यतः स्थितो भवत्यभिषेचनपर्यन्तम् ततो
वेदीसमीपमागतौ वधूवरौ प्रति कन्यापिता परस्परं समीक्षेथामित्यध्येष-
यति तौच वरपठितैः अघोरचक्षुरपतिघ्न्येधि शिवापशुभ्यः सुमनाः सुवर्चाः
वीरसूर्देवकामास्योनाशन्नो भवद्विपदे शञ्चतुष्पदे १ सोमः प्रथमो विविदे
गन्धर्वो विविद उत्तरः तृतीयोऽअग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः २ सोमोऽद-
दद्गन्धर्वाय गन्धर्वोऽददग्नये रयिञ्च पुत्राँश्चादादग्निर्मह्यमथो इमाम् ३ सा-
नः पूषाशिवतमा मेरयसानऊरू उशती विहर यस्यामुशन्तः प्रहराम शेपं

यस्यामुकामाबहवो निविष्टौ ४ इति मन्त्रैस्समीक्षतःपरस्परम् ततो वरो
दक्षिणपादेन वधूर्वामपादेन वेदीमारुह्य प्रदक्षिणमग्निम्पर्याणीय पश्चाद-
ग्नेस्तेजनीन्नामतृणपूलीन्दक्षिणपादेन परिवृत्त्यैकस्मिन् कुशास्तृते आसन
उपविशति वरः। तद्दक्षिणतो वधूः वरस्तु विवाहाङ्गहोमङ्करिष्ये तत्र प्रजा-
पतिम् इन्द्रम् अग्निम् सोमम् अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नी-
वरुणौ अग्निम् वरुणम् सवितारम् विष्णुम् विश्वान्देवान्मरुतस्स्वर्कान्
वरुणम् ऋतासाहम् ऋतधामानम् अग्निम् गन्धर्वम् ओषधीः अप्सरसः
मुदः सꣳहितम् विश्वसामानम् सूर्यम् गन्धर्वम् मरीचीः अप्सरसः आयुवः

सुषुम्णाम् सूर्यरश्मिम् चन्द्रमसम् गन्धर्वम् नक्षत्राणि अप्सरसः भेकुरीः इषिरम्
विश्वव्यचसम् वातम् गन्धर्वम् अपः अप्सरसः ऊर्जः भुज्युम् सुपर्णम् यज्ञम्
गन्धर्वम् दक्षिणाः अप्सरसः तावाः प्रजापतिम् विश्वकर्माणम् मनः गन्धर्वम्
ऋक्सामानि अप्सरसः एष्टीः चित्तम् चित्तिम् आकूतम् आकूतिम् विज्ञातम्
विज्ञातिम् मनः शाक्करीः दर्शम् पौर्णमासम् बृहतम् रथन्तरम् प्रजापतिम्
अग्निम्भूतानामधिपतिम् इन्द्रम् ज्येष्ठानामधिपतिम् यमम् पृथिव्या अधि-
पतिम् वायुमन्तरिक्षस्याधिपतिम् सूर्यन्दिवोऽधिपतिम् चन्द्रमसन्नक्षत्रा-
णामधिपतिम् बृहस्पतिम्ब्रह्मणोऽधिपतिम् मित्रं सत्यानामधिपतिम् वरु-

णामपामधिपतिम् समुद्रम् स्रोत्यानामधिपतिम् अन्नꣳसाम्राज्यानामधिप-
तिम् सोममोषधीनामधिपतिम् सवितारम्प्रसवानामधिपतिम् रुद्रम्पशूना-
मधिपतिम् त्वष्टारं रूपाणामधिपतिम् विष्णुम्पर्वतानामधिपतिम् मरुतो-
गणानामधिपतीन् पितॄन्पितामहान् परान् अवरान् ततान् ततामहान्
अग्निम् अग्निम् अग्निम् वैवस्वतम् मृत्युम् एतादेवता आज्येन त्रिरग्निम्
सकृत् भगम् लाजैः प्रजापतिम् अग्निम् स्विष्टकृतञ्चाज्येन एतादेवता अङ्ग-
प्रधानार्थां अस्मिन् विवाहहोमेऽहं यक्ष्ये अस्मिन् विवाहहोमे ब्रह्माभवेति
ब्रह्मवरणादिप्रकृतचरुरहितब्रह्मवरान्तपात्रासादनान्ते कुमारीभ्राता शूर्पे

शमीपर्णमिश्रांल्लाजान् दृषदं रोहितमानडुहञ्चर्म आचार्याय वरश्चैतान्युप-
कल्प्य पवित्रकरणादिपर्युक्षणान्ते आज्येन ब्रह्मणाऽन्वारब्धः ॐप्रजापतये
स्वाहा इदम्प्रजापतये नमम इन्द्राय स्वाहा इदमिन्द्राय नमम अग्नये०
इदमग्नये न० सोमाय० इदं सोमाय न० भूः स्वा० इदमग्नये न० भुवः
स्वाहा इदम्वायवे न० स्वः स्वाहा इदं सूर्याय न० त्वन्नोअग्ने वरुण०स्म-
त्स्वाहा इदमग्नीवरुणाभ्यान्न० सत्वन्नोअग्नेवमो० एधिस्वाहा इदमग्नीवरु-
णाभ्यान्न० अयाश्चाग्ने० स्वाहा इदमग्नये न० येतेशतं० स्वा० इदम्वरुणाय
सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यस्स्वर्केभ्यश्च न० उदुत्तमम्व० स्याम

स्वा० इदम्वरुणाय न० अतोऽनन्वारम्भः अथ द्वादशराष्ट्रभृद्धोमाः ऋताषा-
ड्ऋतधामाग्निर्गन्धर्वःसनइदम्ब्रह्मक्षत्रम्पातुतस्मै स्वाहा वाट् इदमृताषा-
हेऋतधाम्नेऽग्नये गन्धर्वाय नमम १ ऋताषाड्ऋतधामाग्निर्गन्धर्वस्तस्यौषध-
योऽप्सरसोमुदोनामताभ्यः स्वाहा इदमोषधीभ्योऽप्सरोभ्योमुद्भ्यो नमम २
सꣳहितोविश्वसामा सूर्योगन्धर्वःसनइदम्ब्रह्म० वाट् इदं सꣳहिताय विश्व-
साम्ने सूर्याय गन्धर्वाय न० ३ सꣳहितोविश्वसामासूर्योगन्धर्वस्तस्यमरीचयो-
ऽप्सरसऽआयुवोनामताभ्यस्वाहा इदम्मरीचिभ्योऽप्सरोभ्यऽआयुभ्यो न० ४
सुषुम्णस्सूर्यरश्मिश्चन्द्रमागन्धर्वस्सनइदं० वाट् इदं सुषुम्णाय सूर्यरश्मये

चन्द्रमसे गन्धर्वाय नमम ५ सुषुम्णः सूर्यरश्मिश्चन्द्रमागन्धर्वस्तस्यनक्षत्राण्य-
प्सरसोभेकुरयोनामताभ्यस्स्वा० इदन्नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यो नमम ६
इषिरोव्विश्वव्यचावातोगन्धर्वस्सनइदं० व्वाट् इदमिषिराय विश्वव्यचसे वा-
ताय गन्धर्वाय न० ७ इषिरोविश्वव्यचावातोगन्धर्वस्तस्यापोअप्सरसऊर्जोना-
मताभ्यस्स्वाहा इदमद्भ्योऽप्सरोभ्यऊर्ग्भ्यो न० ८ भुज्युस्सुपर्णोयज्ञोगन्धर्वस्स-
न० व्वाट् इदम्भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय न० ९ भुज्युस्सुपर्णोयज्ञोग-
न्धर्वस्तस्य दक्षिणा अप्सरसस्तावानामताभ्यस्स्वाहा इदन्दक्षिणाभ्योऽप्सरो-
भ्यस्तावाभ्यो न० १० प्रजापतिर्विश्वकर्मामनोगन्धर्वस्सनइदं० व्वाट् इदम्प्रजा-

पतये विश्वकर्मणे मनसे गन्धर्वाय न० ११ प्रजापतिर्विश्वकर्मामनोगन्धर्वस्त-
स्यऋक्सामान्यप्सरसएष्टयोनामताभ्यस्वाहा इदमृक्सामभ्योऽप्सरोभ्य एष्टि-
भ्यो न० १२ इति राष्ट्रभृद्धोमः ॥ अथ त्रयोदशजयाहोमाः चित्तञ्च स्वाहा इद-
ञ्चित्ताय नमम १ चित्तिश्च स्वाहा इदञ्चित्त्यै० २ आकूतञ्च स्वाहा इदमाकूताय०
३ आकूतिश्च स्वाहा० इदमाकूत्यै० ४ विज्ञातञ्च स्वा० इदम्विज्ञाताय० ५ विज्ञा-
तिश्च स्वा० इदम्विज्ञात्यै० ६ मनश्च स्वा० इदम्मनसे० ७ शाक्करीश्च स्वाहा
इदं शाक्करीभ्यो० ८ दर्शश्च स्वाहा इदन्दर्शाय० ९ पौर्णमासञ्च स्वा० इदम्पौ-
र्णमासाय० १० बृहच्च स्वा० इदम्बृहते० ११ रथन्तरञ्च स्वा० इदं रथन्तराय १२

प्रजापतिर्जयानिन्द्रायवृष्णेप्रायच्छदुग्रःपृतनाजयेषु तस्मैविशस्समनमन्तस-
र्वाः स उग्रः स इ हव्यो बभूव स्वाहा इदम्प्रजापतये १३ इति जयाहोमाः ॥
अथ द्वाविंशत्यभ्यातानहोमाः अग्निर्भूतानामधिपतिस्समावत्वस्मिन्ब्र-
ह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यान्देवहूत्याᳬं स्वा-
हा इदमग्नये भूतानामधिपतये नमम १ इन्द्रोज्येष्ठानामधिपतिः स० इद-
मिन्द्राय ज्येष्ठानामधिपतये० २ यमः पृथिव्याअधिपतिः स० इदं यमाय
पृथिव्याअधिपतये० ३ वायुरन्तरिक्षस्याधि० इदम्वायवेऽन्तरिक्षस्याधिपतये०
४ सूर्योदिवोधिप० इदं सूर्याय दिवोऽधिपतये० ५ चन्द्रमानक्षत्राणाम० इद-

श्चन्द्रमसे नक्षत्राणामधिप० ६ बृहस्पतिर्ब्रह्मणोधिप० इदम्बृहस्पतये ब्रह्म-
णोऽधिप० ७ मित्रस्सत्यानामधि० इदम्मित्राय सत्यानामधिप० ८ वरुणो-
ऽपामधिपति० इदम्वरुणायापामधिप० ९ समुद्रः स्रोत्यानामधिप० इदं
समुद्राय स्रोत्यानामधि० १० अन्नꣳसाम्राज्यानामधिपतितन्मावत्वस्मिन्
ब्रह्म० इदमन्नाय साम्राज्यानामधिपत० ११ सोम ओषधीनामधिपतिस्स०
इदं सोमायौषधीनामधि० १२ सविताप्रसवानामधिपति० इदं सवित्रे प्रस-
वानामधि० १३ रुद्रः पशूनामधि० इदं रुद्राय पशूनामधिपत० १४ प्रणीतो-
दकोपस्पर्शः त्वष्टारूपाणामधि० इदं त्वष्ट्रे रूपाणामधिपत० १५ विष्णुःपर्व-

तानाम० इदम्विष्णावे पर्वतानाम० १६ मरुतोगणानामधिपतयस्तेमावन्त्व-
स्मिन्ब्रह्म० इदम्मरुद्भ्यो गणानामधिपतिभ्यो० १७ पितरः पितामहाः परेऽ-
वरेततास्ततामहाः इहमावन्त्वस्मिन्ब्रह्म० इदं पितृभ्यः पितामहेभ्यः परे-
भ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यश्च न० प्रणीतोदकस्पर्शः १८ केचिदेतेषामष्टादशा-
नामेवाभ्यातानसञ्ज्ञामिच्छन्ति कारिकाकारस्तु द्वाविंशतिरभ्यातानाञ्जुहुयात्
तद् घृतेन ता इति वैवस्वतोनोऽभयङ्कृणोतुस्वाहेत्यन्तानान्द्वाविंशतीना-
मप्यभ्यातानसञ्ज्ञामिच्छन्ति उभयमते ऋष्याद्येकमेवपूर्वोक्तम् अग्निरैतु प्रथ-
मोदेवतानाꣳसोऽस्यैप्रजाम्मुञ्चन्तुमृत्युपाशात् तदयꣳराजावरुणोऽनुमन्यतां

यथेयᳬंस्त्रीपौत्रमघन्नरोदात्स्वाहा इदमग्नये० १९ इमामग्निस्त्रायताङ्गार्ह-
पत्यः प्रजामस्यैनयतुदीर्घमायुः अशून्योपस्थाजीवतामस्तुमातापौत्रमान-
न्दमभिविबुध्यतामियᳬंस्वाहा इदमग्नये० २० स्वस्तिनोअग्नेदिवआपृथि-
व्याविश्वानिधेह्ययथायजत्र यदस्याम्महिदिविजातम्प्रशस्तन्तदस्मासुद्रवि-
णन्धेहिचित्रᳬंस्वाहा इदमग्नये० २१ सुगन्नुपन्थाम्प्रदिशन्नएहिज्योतिष्म-
द्धेह्यजरन्नआयुः अपैतुमृत्युरमृतम्मआगाद्वैवस्वतोनोअभयङ्कृणोतुस्वाहा
इदंवैवस्वताय० २२ इत्यभ्यातानहोमाः परम्मृत्योऽअनुपरेहिपन्थां यस्ते-
अन्यऽइतरोदेवयानात् चक्षुष्मतेशृण्वतेतेब्रवीमिमानः प्रजाᳬंरीरिषोमोत-

वीरान्त्स्वाहा इदम्मृत्यवे० १ इदम्पितृभ्यो नमम इतिवा प्रणीतोद० अथ ला-
जाहोमः शूर्पस्थाँल्लाजान् चतुर्थांशेन कुमार्याभ्राता शमीपलाशमिश्राँल्ला-
जानञ्जलिनाञ्जलावावपति तान् संहतेन प्राङ्मुखी तिष्ठती भ्रात्रञ्जलि-
दत्तलाजागृहीताञ्जलिना स्वपठितैस्त्रिभिर्मन्त्रैस्तृतीयांशम्प्रतिमन्त्रन्देवती-
र्थेन वा प्राजापत्येन जुहोति अर्यमणन्देवङ्कन्याअग्निमयक्षत सनोअ-
र्यमादेवःप्रेतोमुञ्चतुमापते स्वाहा त्यागस्तु वरस्यैव इदमग्नये १ इदम-
र्यम्णे इति वासुदेवः इयन्नार्युपब्रूते लाजानावपन्तिका आयुष्मानस्तुमे
पतिरेधन्ताञ्ज्ञातयो मम स्वाहा इदमग्नये० २ इमाँल्लाजानावपाम्यग्नौस-

मृद्धिकरणन्तव ममतुभ्यञ्चसम्वननन्तदग्निरनुमन्यतामियꣳस्वाहा इदम-
ग्नये नमम ३ अथ वरः अस्या उत्तानन्ददिणं हस्तंसाङ्गुष्ठङ् गृभ्णामि
तेसौभगत्वाय हस्तम्मया पत्या जरदष्टिर्यथासः भगोअर्यमा सविता पुर-
न्धिर्मह्यन्त्वाऽदुर्गार्हपत्याय देवाः १ अमोऽहमस्मि सात्वꣳसात्वमस्यमोअहं
सामाहमस्मिऋक्त्वन्द्यौरहम्पृथिवीत्वम् २ तावेहिविवहावहै सहरेतोदधा-
वहै प्रजाम्प्रजनयावहै पुत्रान् विन्द्यावहै बहून् ३ तेसन्तुजरदष्टयः सम्प्रि-
यौरोचिष्णूसुमनस्यमानौ पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम
शरदः शतम् ४ इति मन्त्रैर्गृह्णाति वरो वध्वा सहाग्नेरुत्तरतो गत्वा वध्वा द-

क्षिणाङ्कुरं स्ववामकरेणादाय स्वदक्षिणपाणिना वधूदक्षिणपादमादाय दृष-
दम् आरोहेममश्मानमश्मेवत्वꣳस्थिराभव अभितिष्ठपृतन्यतोऽवबाधस्व
पृतनायत इत्यनेन मन्त्रेणारोहयत्येनाम् अथ दृषदारूढायाम्वरो गाथाङ्गा-
यति सरस्वतिप्रेदमवसुभगेवाजिनीवतियान्त्वाविश्वस्य भूतस्य प्रजायाम-
स्याग्रतः यस्याम्भूतꣳसमभवद्यस्याम्विश्वमिदञ्जगत् तामद्यगाथाङ्गास्यामि
यास्त्रीणामुत्तमंयशः इति वरः पुनर्दक्षिणकरेण तद्दक्षिणकरङ् गृहीत्वाऽग्नि-
म्प्रदक्षिणम् तुभ्यमग्नेपर्यवहन्त्सूर्याम्वहतुना सह पुनः पतिभ्यो जायान्दाग्ने
प्रजया सह १ इति मन्त्रेण वरपठितेन परिक्रामतः ब्रह्माग्न्योरन्तरेण एव-

न्द्विरपरं लाजावपनादिपरिक्रमणान्तम्मन्त्रवत्कर्त्तव्यम् ततः कुमारीभ्राता
शूर्पकुष्ठया सर्वाँल्लाजान् कुमार्यञ्जलावावपति सा तिष्ठत्येव भगाय स्वाहा
इदम्भगाय० सर्वान्जुहोति ततस्समाचारात्तूष्णीं हस्तग्रहणारोहणपरिक्रम-
णानि ततो वरो ब्रह्मणाऽन्वारब्ध आज्येन प्रजापतये स्वाहा इदम्प्रजापतये०
वरः अथैनामुदीचीं सप्तपदानि प्रक्रामयति यथाऽस्या वामपादेन दक्षिण-
म्पादन्नातिक्रामति यथा एकमिषेविष्णुस्त्वा नयतु इति वरेणोक्तस्य मन्त्र-
स्यान्ते वधूः प्रथमपादमुदक् दधाति १ द्वे ऊर्ज्जे विष्णु० इत्यस्यान्ते द्विती-
यम् २ त्रीणि रायस्पोषाय वि० इत्यस्यान्ते तृतीयम् ३ चत्वारि मायो

भवाय वि० इतिचतुर्थम् ४ पञ्चपशुभ्यो वि० इति पञ्चमम् ५ षड्ऋतुभ्यो वि० इति षष्ठम् ६ सखे सप्तपदाभव सामामनुव्रताभव वि० इत्यस्यान्तेसप्तमम् ७ अथ वरः निष्क्रमणप्रभृत्युदकुम्भंस्कन्धेकृत्वावाग्यतः स्थितोभवत्युत्तरतो वरः ततः प्रवालदूर्वाङ्कुरैरेनाम्वधूम्मूर्द्धनि आपश्शिवाश्शिवतमाश्शान्ता-श्शान्ततमास्तास्ते कृण्वन्तुभेषजमित्यभिषिञ्चति आपोहिष्ठेति च तिसृभि-र्द्वितीयवारमभिषिञ्चति दिवाविवाहश्चेत् वरो वधूम् सूर्यमुदीक्षस्व इत्य-ध्येषयति सा च तच्चक्षुर्देवहितं० शतात् इति मन्त्रेण स्वयम्पठितेन सूर्यमु-दीक्षते अथ वरस्वदक्षिणकरम्वध्वा दक्षिणांसोपरितो नीत्वा मम व्रते ते

हृदयन्दधामि मम चित्तमनुचित्तन्ते अस्तु मम वाचमेकमनाजुषस्व प्रजा-
पतिष्ट्वानियुनक्तुमह्यम् इति मन्त्रेण हृदयमालभते अथैनाम् सुमङ्गलीरि-
यम्वधूरिमाꣳसमेतपश्यत सौभाग्यमस्यैदत्वायाथास्तम्विपरेतन इति मन्त्रे-
णाभिमन्त्रयते संहताभ्याम्पाणिभ्याम् अत्र पतिपुत्रान्विताभव्याश्चतस्रस्सु-
भगाःस्त्रियः वधूम्वरस्य वामभागे उपवेशयन्ति वरेण तस्यास्सीमन्ते सिन्दू-
रन्दापयन्ति तथा सुवासिनीभ्यो गुडजीरकवायनदानङ्कारयन्ति तदुत्तरी-
यग्रन्थौ जीरकन्धान्यञ्च बध्वा श्रीगौरीसावित्रीसौभाग्यञ्जन्मनि तेऽस्तु इति
कर्णे कथयन्ति एतावत्समाचारप्राप्तङ्कारयितव्यम् तां वरउत्थाप्य प्राग्वोद-

ग्वाऽनुगुप्त आगारेआनुडुहे रोहिते चर्मणि इहगावोनिषीदन्त्विहाश्वा इहपू-
रुषाः इहोसहस्रदक्षिणोयज्ञइहपूषानिषीदन्तु इत्युपवेशयति तत आगत्या-
ग्नेः पश्चादुपविश्य वरो ब्रह्मान्वारब्धः अग्नयेस्विष्टकृते स्वाहा इदमग्नये
स्विष्टकृते नमम संस्रवप्राशनादिप्रणीताविमोकान्तेआचार्याय वरन्ददाति
गाम्ब्राह्मणश्चेद्वरः राजन्यश्चेद्ग्रामम् वैश्यश्चेदश्वम् अन्येभ्यो ब्राह्मणेभ्यो
यथाश्रद्धं सुवर्णरजतादिदक्षिणान्दातुमुत्सृजे इति सङ्कल्प्य दद्यात् कृतैत-
द्विवाहकर्मणोऽङ्गतया विहितं यथाशक्ति ब्राह्मणेभ्यो भोजनंसम्प्रदास्य इति
सङ्कल्प्य यथा काले ब्राह्मणान् भोजयेत् न्यूनन्तर्हिदश १० दिवाविवाहश्चे-

दस्तमिते रात्रौ चेत् ब्राह्मणतर्प्पणसङ्कल्पोत्तरम् वरः ध्रुवमीक्षस्व इति वधू-
म्प्रेषयति साच ध्रुवमसिध्रुवन्त्वापश्यामि ध्रुवैधिपोष्येमयिमह्यन्त्वादात्
बृहस्पतिर्मयापत्याप्रजावतीसञ्जीवशरदश्शतम् इति वरपठिते मन्त्रान्ते ध्रु-
वमीक्षते सायदि न पश्येत्पश्यामीत्येवब्रूयात् त्रिरात्रमक्षारालवणाशिनौ
स्यातामधश्शयीयाताम्मिथुनञ्च नोपेयाताम्। एकपात्रे सहाश्नीत केचित्तत्प्र-
थमेऽहनि। पयोवर्ज्यंहविष्यान्नमित्यवोचत्त्रिविक्रमः १ अजस्रमग्निधारणम्भ-
वेद्विवाहहोमतः। ततोऽग्निना सहव्रजेत्प्रयाणकालतो वरः २ कथञ्चिद-
ग्निनाशनम्भवेत्स्वयोनिनिर्हृतिः। ततोग्न्यनुगमननिमित्तमनादिष्टहोमम्प्रा-

यश्चित्तङ्करिष्ये इति सङ्कल्प्य पूर्वोक्तमनादिष्टहोमङ्कुर्यात् इति विवाहः ॥
अथ विवाहदिनाच्चतुर्थरात्रौ तत्र भद्रासत्वे दिन एव शिष्टाचारप्राप्त-
स्वरमात्रे वरपत्ते सभार्यैव वंशपात्रदानङ्कर्त्तव्यङ्कन्यापित्रा। सवस्त्रफलताम्बू-
लन्दम्पत्योः प्रीतिवर्द्धनम्। ऐरिणयाख्यं वंशपात्रम्पक्वान्नैः परिपूरितम् ॥ कर-
कैरुद्रसङ्ख्याकैस्सुवर्णपरिपूरितैः। एतावदैरिणीरूपङ्कर्त्तव्याङ्खिलसूरिभिः। एवं
सम्पाद्य कन्यापिता सभार्यः देशकालौ सङ्कीर्त्य कृतविवाहफलप्रतिष्ठार्थं
वधूवरयोर्वरपित्रादीनाम्वस्त्रसमर्पणङ्करिष्ये इति सङ्कल्प्य यथाविभवम्वर-
पित्रादीनाम्वस्त्राणि समर्पयेत् पुनर्देशकालौ स्मृत्वा ममोमामहेश्वरप्रीति-

द्वारा कृतैतत्कन्यादानफलसम्पूर्णतायै वंशाभिवृद्धयेच ऐरिणीपूजनम्वरमात्रे ऐरिणीदानञ्च करिष्ये इति सङ्कल्प्य। ऐरिणी त्वमुमा देवी महेशो गिरिजा-पतिः। अतस्त्वां पूजयिष्यामि ऐरिणीं सर्वकामदाम्। सवस्त्राञ्च सदीपाञ्च शूर्पैष्षोडशभिर्वृताम्। वरमात्रे प्रदास्यामि कन्यादानस्य सिद्धये इति सङ्कल्प्य महावंशपात्रे षोडशक्षुद्रवंशपात्रदीपपूर्णकादशकरकवस्त्रताम्बूललड्डुकापू-रिकाहरिद्राचूर्णयुते उमामहेश्वरौ सम्पूज्य अनेन वंशपात्रदानेन विश्वरूप-धरो देवः प्रीयतामुमयासह वरमात्रे दत्वा मन्त्रान् पठेत्। वंशो वंशकर-श्श्रेष्ठो वंशो वंशसमुद्भवः। अनेन वंशदानेन तुष्टो वृद्धिकरोऽस्तुमे। वंशपात्रमि-

दम्पुण्यम्वंशजातिसमुद्भवम्। वंशानामुत्तमन्दानमतश्शान्तिम्प्रयच्छ मे। वंश-
पात्राणि सर्वाणि मया सम्पादितानि वै। उमाकान्ताय दत्तानि मम गोत्रा-
भिवृद्धये। वंशवृद्धिकरन्दानं सौभाग्यादिसमन्वितम्। सर्वपापक्षयकरन्नानाद्र-
व्यैश्च पूरितम्। दानानामुत्तमन्दानमतश्शान्तिम्प्रयच्छ मे। ततस्तेन यथाचा-
रम्वरमातृपित्रादीन्नीराज्य हस्ताभ्याङ्कन्यामादाय। अष्टवर्षावधियङ्कन्या पुत्र-
वत्पालिता मया। इदानीन्तव पुत्राय दत्ता स्नेहेन पाल्यताम् इत्युक्त्वा वर-
मातृपित्रादीनामुत्सङ्गे निवेशयेत् ततस्सकञ्चुकवंशशूर्पदानम्बध्वा कारणी-
यम् इत्याचारप्राप्तञ्चतुर्थदिनपूर्वरात्रिकृत्यङ्कृत्वा कन्यापितृभ्याम्भोक्तव्यम्

अन्यदपि घृतमुपलपुत्रकदानञ्च वधूवराभ्याङ्कारयन्ति उपलञ्च वस्त्रे क्षिप्त्वा वरपित्रादिशिरसि धृत्वा हरिद्रोदकं सिञ्चतीत्याचारो महाराष्ट्राणाम्। इत्यैरिणीदानम्। अथ चतुर्थीकर्म। चतुर्थ्यामपररात्रे वरो वध्वा सह स्नात्वा गृहाभ्यन्तरतः पञ्चभूसंस्कारपूर्वकन्धारितविवाहाग्निमुपसमाधाय तत्पश्चा-त्कुशासनोपविष्ट आचमनप्राणायामत्रयदेशकालकीर्तनान्ते विवाहाङ्गभूत-श्चतुर्थीकर्माहङ्करिष्ये तत्र पूर्वेण ब्रह्मणो गमनम् अपरेण पात्रासादनम् द्वे पवित्रे मृन्मय्याज्यस्थाली ताम्रमयी चरुस्थाली पालाश्यस्समिधः प्राञ्चा-वाघारौ समिद्धतमे आज्यभागौ पूर्णपात्रन्दक्षिणा एतान् वैकल्पिकानहङ्क-

रिष्ये अग्नेप्रायश्चित्तइत्यादिपञ्चानाम्परमेष्ठिऋषिः त्रिष्टुपछन्दः लिङ्गोक्तादे-
वता होमे विनियोगः ॐभूर्भुवस्स्वरित्यादिउदुत्तममित्यन्तानामृष्यादि वि-
वाहवत् यात इत्यस्य प्रजापति० त्रिष्टुप्० वधूर्दे० अभिषेके वि० प्राशीस्त
इत्यस्य प्रजापति० यजुः वधूर्दे० चरुशेषप्राशने वि० अथ देवतावधारणम्
तत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अग्निम् वायुम् सूर्यम् चन्द्रमसम्
गन्धर्वम् एतादेवता आज्येन विष्णुम्प्रजापतिञ्चरुणा अग्निम् स्विष्टकृतञ्चरु-
शेषेण अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम्
सवितारम् विष्णुम् विश्वान्देवान् मरुतस्स्वर्कान् वरुणम् प्रजापतिम् एताः

पुनराज्येन एता अङ्गप्रधानार्थां अस्मिन्कर्मण्यहं यक्ष्ये विवाहाङ्गचतुर्थी-
कर्माहङ्करिष्ये तत्र मेऽमुकशर्मन् ब्रह्मा भव भवामीति तेनोक्ते दक्षिणतोऽ
ग्नेर्ब्रह्माणमुपवेश्य प्रणीतास्थानादुत्तरत उदपात्रम्प्रतिष्ठाप्य प्रणीताप्रणय-
नादि स्थालीपाकंश्रपयित्वोद्वासनादन्वारब्धआघारावाज्यभागान्ते ब्रह्म-
णाऽनन्वारब्धः अग्नेप्रायश्चित्तेत्वन्देवानाम्प्रायश्चित्तिरसिब्राह्मणस्त्वानाथ-
कामउपधावामियास्यैपतिघ्नीतनूस्तामस्यैनाशय स्वाहा इदमग्नये नमम १
एतदारभ्य प्राजापत्यन्तानां षडाहुतीनामुदपात्रे संस्रवप्रक्षेपः स्विष्टकृतोऽपी-
ति केचित् अन्यासाम्प्रोक्षणीपात्रे पात्रान्तरे वा वायोप्रायश्चित्तेत्वं० प्रजा-

घ्नीतनू० स्वाहा इदम्वायवे न० २ सूर्यप्रायश्चित्ते त्वं० पशुघ्नीतनू० स्वाहा इदं
सूर्याय० ३ चन्द्रप्रायश्चित्ते त्वं० गृहघ्नीतनू० इदञ्चन्द्राय० ४ गन्धर्वप्रायश्चित्ते त्वं०
यशोघ्नीतनू० इदङ्गन्धर्वाय० ५ चरुमभिघार्य स्रुवेणैव प्रजापतये स्वाहा इदम्प्र-
जापतये० ६ पुनरन्वारब्धश्चरोरुत्तरार्द्धात् अग्नये स्विष्टकृते स्वाहा इदमग्नये
स्विष्टकृते० तत आज्येन भूः स्वाहा इदमग्नये १ भुवः स्वाहा इदम्वायवे २ स्वः
स्वाहा इदं सूर्याय० ३ त्वन्नो अग्ने० स्वाहा इदमग्नीवरुणाभ्याम्० ४ सत्वन्नो०
स्वाहा इदमग्नीवरुणाभ्याम्० ५ अयाश्चाग्ने० स्वाहा इदमग्नये० ६ येतेशतम्व०
स्वाहा इदम्वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यस्स्वर्केभ्यश्च

न० ७ उदुत्तमम्० स्वाहा इदम्वरुणाय० ८ प्रजापतये स्वाहा इदम्प्रजापतये० ९ पात्रान्तरस्थसंस्रवप्राशनम् पवित्राभ्याम्मार्जनम् पवित्रप्रतिपत्तिः ब्रह्मन् चतुर्थीकर्मणोऽङ्गतया विहितमिदम्पूर्णपात्रन्तुभ्यमहं सम्प्रददे ब्रह्मा प्रतिगृह्णामि प्रणीताविमोकः वरो दक्षिणहस्तगृहीतप्रवालैरुदपात्रस्योदकमादाय यातेपतिघ्नीप्रजाघ्नीपशुघ्नीगृहघ्नीयशोघ्नीनिन्दितातनूर्जारघ्नीन्तत एनाङ्करोमि साजीर्यत्वम्मयासह वेणीनाम्नीत्यनेनैनामूर्द्धन्यभिषिञ्चति अथैनाꣳस्थालीपाकम् प्राशीस्ते प्राणान्त्सन्दधाम्यस्थिभिरस्थीनि माꣳसैर्माꣳसानि त्वचा त्वचम् इति प्राशयतिसकृत् अयम्वधूसंस्कार एव न शेषप्रतिपत्तिः

अतश्चस्वरूपघाते अन्योत्पादनम् वधूश्च्शुद्ध्यर्थमाचामेत् इति चतुर्थीकर्म ॥
अथ देवकोत्थापनम् तच्च षष्ठवर्जितसमेपञ्चमे सप्तमेवा विषमे दिवसे
भद्रादिवर्जिते मण्डपे सभार्य उपविश्याचमनप्राणायामत्रयदेशकालकीर्त-
नान्ते अमुककर्माङ्गत्वेन स्थापितदेवतानामुत्थापनमण्डपोद्वासनम्पुण्याह-
वाचनमहङ्करिष्ये इति सङ्कल्प्य स्थापनक्रमेण सर्वास्सम्पूज्य उत्तिष्ठ ब्रह्म-
णस्पते० सचा १ उस्रावेतन्धूर्षाहौजु० गच्छतम् २ यान्तु देवगणास्सर्वे
पूजामादाय भूतलात् । ऋद्धिञ्च विपुलान्दत्वा पुनरागमनाय च इति वि-
सृज्य मण्डपमध्ये आनीय तैलाभ्यङ्गोद्वर्त्तनोष्णोदकस्नानानि कृत्वा वेष्ट-

नान्युन्मुच्य पुण्याहम्वाचयित्वा द्विजैरभिषेकान्ते पुरोहितो वंशपात्रे तत्स-
वन्निधाय जलम्प्रक्षिप्य सकुटुम्बस्य यजमानस्य शिरसि स्रावयेत् तत्र देव-
स्यत्वा ३ सोमस्यत्विषिः १ पालाशम्भवतीति पठेत् कर्त्ता बद्धाञ्जलिः अस्म-
द्गोत्रे षट्सु षट्सु मासेषु सुशोभनमस्तु इति द्विजान्प्रतिब्रूयात् तैस्तथाऽस्तु
प्रत्युक्ते चन्दनताम्बूलदक्षिणाभिस्तान् सम्पूज्याशिषो गृह्णीयात् इति देव-
कोत्थापनम् ॥ अथ वधूप्रवेशः । स च आरभ्योद्वाहदिवसात् षष्ठे वाऽप्यष्टमे
दिने। वधूप्रवेशस्सम्पत्त्यै दशमेऽथ समे दिने नारदोक्तेः। षष्ठाष्टमे वा दशमे
दिनेवा विवाहमारभ्य वधूप्रवेशः । पञ्चाङ्गसंशुद्धिदिनम्विनाऽपि विधावस-

द्गोचरगोऽपि शस्तः इति वशिष्ठोक्तेश्च समदिवसे एव रात्रौ गणपतिल-
क्ष्मीपूजनम्पुण्याहवाचनङ्कृत्वा वधूकण्ठे सुवर्णमुक्तादिहारम्मुक्ता दुग्ध-
म्प्राशयेद्वधूम् तया तम्रा सुवर्णपदागताहमिति वक्तव्यम् शान्तिपाठमङ्गला-
शीर्वचनानि ब्राह्मणैः पठनीयानि एवं सति । वधूप्रवेशः प्रथमेतृतीयेशुभ-
प्रदः पञ्चमके तथाऽह्नि द्वितीयके वाऽथ चतुर्थके वा षष्ठे वियोगामयदुःखद-
स्स्यात् इत्यज्ञातवक्तृकश्लोकलिखितम् पूर्वोक्तनारदवशिष्ठवचनविरुद्ध-
त्वान्नादर्त्तव्यम् इति वधूप्रवेशः । इदञ्चतुर्थीकर्मणः प्राग्वा कार्यम् ॥ अथ
वधूपितृगृहात् वरस्य वध्वा विवाहाग्निनाच सह स्वगृहमगने रथयाने-

न क्रियमाणेऽक्षभेदनम् रथबद्धमोक्षणम् युगादिभेदनं स्यात् तदनिष्टशमन-
म्प्रायश्चित्तस्त्विहितम् सूत्रकृता राज्ञोऽक्षभेदे नद्धविमोक्षे यानविपर्यासेऽन्य
स्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने तमेवाऽग्निमुपसमाधायेत्यादि कारिकाकारः
ततो वधूप्रवेशनम् । वरालये पितुर्गृहात् भवेद्विवाहभेविधौ शुभग्रहैस्समी-
क्षिते अजस्रमग्निधारणमिति विवाहवत् । कथञ्चिदग्निनाशनम्भवेत्स्वयो-
निनिर्हृतिः । ततोऽत्र भेषजम्भवेद्यथोक्तमस्यशेषतः १ वधूवरौ रथेऽथवा हया-
दिकेऽधिरोहतः । प्रयाणकालतस्त्वथो रथाक्षभेदनम्भवेत् २ रथस्य बन्धमोक्षणं
हयादिके विपर्ययात् । भवेदनिष्टमेववा युगादिकन्निमित्ततः ३ प्रायश्चित्ति-

र्भवेदत्राप्यागूर्वैकल्यपूर्विका। प्रायश्चित्तङ्करिष्ये हन्ततो वैवाहिकानले ४ स्था-
पयेत्संस्कृते देशे स्मरेद्वैकल्पिकानथ इत्याद्युक्तम् तत्र प्रयोगः शुचिर्वरआ-
चमनप्राणायामत्रयङ् कृत्वा अक्षादिभेदनिमित्तम्प्रायश्चित्तङ्कर्तुन्तदङ्गतया
गणेशपूजनम्पुण्याहवाचनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्ना-
न्दीश्राद्धञ्च करिष्ये इति सङ्कल्प्य कृत्वा शुचिदेशे पञ्चभूसंस्कारान्कृत्वा विवा-
हाग्निं स्थापयित्वा पुनराचमनप्राणायामदेशकालकीर्तनान्ते रथाक्षभेदनि-
मित्तम्प्रायश्चित्तमहङ्करिष्ये तत्र पूर्वेण ब्रह्मणो गमनमित्यादिप्राकृतम्पूर्णपा-
त्रस्थाने धुर्यौ दक्षिणा इति वैकल्पिकानहङ्करिष्ये इहरतिद्वयोर्देवाऋषयः

प्रतिष्ठाछन्दः अस्यद्वितीयस्योष्णिक्छन्दः अग्निर्दैवता सत्रोत्थाने वि-
नियोगः १ प्रतिक्षत्र इत्यस्याश्विसरस्वतीप्रजापतिऋषयः त्रिष्टु० विश्वेदेवा
देवता उपवेशने वि० २ आत्वाहार्षमित्यस्य अथर्वणऋषिः अनु० ध्रुवो दे०
विष्णुक्रमे वि० ३ भूरादीनाम्पूर्ववत् अग्निम् अग्निम् प्रजापतिम् इन्द्रम्
अग्निम् सोमम् अग्निम् वायुम् सूर्यमित्यादिस्विष्टकृदन्तम्प्राकृतवत् ब्रह्मव-
रणाद्यासादने वरधुर्यौ पर्युक्षणान्ते ऽन्वारब्धस्स्रुवेण इहरतिरिहरमध्वमि-
हधृतिरिहस्वधृतिः स्वाहा इदमग्नये० उपसृ० धयन् राय० धरस्वाहा
इदमग्नये० तत आघाराद्याः स्विष्टकृदन्ता ब्रह्मान्वारब्धो जुहुयात् संस्रव-

प्राशनम् पवि० नम् पवि० त्तिः ब्रह्मन्निमौ धुर्यौ प्रतिगृह्यताम् ब्रह्मा प्रति-
गृह्णामि प्रणीताविमोकः ततोऽन्यद्रथादियानमुपकल्प्य तत्र वरः प्रतिष्ठत्रे
प्रतितिष्ठा० गोषु प्रत्यङ्गेषु यज्ञे १ आत्वाहार्षमं० चाचलिः विशस्त्वा०
भ्रशात् २ वधूमुत्क्षिप्योपवेशयेत् राज्ञोऽत्नभेदश्चेत्पुरोहितो राजानमुपवेशयेत्
परं सेनाग्निस्थापनन्तत्रेति विशेषः एतत्कर्माङ्गभूतम्ब्राह्मणभोजनङ्कर्त्तव्यम्
प्रायश्चित्तिरियं सञ्ज्ञा कर्मणोऽस्य बुधैस्स्मृता। तेन नैमित्तिकत्वाच्च नान्दीश्रा-
द्धम्भवेदिहइति इदं वधूप्रवेशनन्त्विविक्रमादिसूरयः। चतुर्थकर्मणः पुरा वद-
न्ति सौम्यवासरे ॥ इतिसप्तर्ष्युपाख्यनरहरिविरचितसंस्कारनृसिंहस्समाप्तः ॥

अथार्कविवाहविधिः ॥ तत्र ज्योतिर्विदादिष्टे शुभे दिने स्नानादिसम्पादि-
तवरो द्विजैस्सह सुवासिनीभिर्वादित्रघोषैश्च सह पूर्वाह्णे पूर्वस्यामुत्तरस्या-
म्वा दिशि गत्वा पुष्पफलयुतं सल्लक्षणोक्तमर्कम्परीक्ष्य तत्र सर्वे उपविशेयुः
वरस्तु अर्कसमीपे स्त्रिया रङ्गमालिकया निर्मिते स्थले वस्त्रादिमृद्वासने द्वि-
जैस्सह प्राङ्मुख उपविशेत् आचमनप्राणायामत्रयङ्कृत्वा श्रीलक्ष्मीनारा-
यणाभ्यान्नम इत्यादिदेशकालकीर्तनान्ते मम तृतीयमानुषीविवाहदोषप-
रिहारद्वारा श्रीपरमेश्वरप्रीतये अर्कविवाहमहङ्करिष्ये इति सङ्कल्प्य तत्रा-
दौ गन्धपुष्पवस्त्रादिभिरर्ककन्याप्रदानार्थमाचार्यम्वृणुयात् विवाहाङ्गत्वेन

स्वस्तिपुण्याहवाचनमविघ्नपूजनमण्डपदेवतापूजनम्मातृकापूजनं वसोर्द्धारा-
पूजनमायुष्यमन्त्रजपं हिरण्येन नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नता-
सिद्ध्यर्थङ्गणेशपूजनमहङ्करिष्ये इति च सङ्कल्प्य तान्यनुक्रमेण कुर्यात् अथाचा-
र्यम्प्रार्थयेत्। कन्यापिता यथासूर्यो देवानाञ्च प्रजापतिः। तथात्वर्कप्रदानार्थ-
माचार्यत्वङ्कुरु द्विज १ इति प्रार्थना तत आचार्यस्स्वशाखोक्तेन विधिना
विष्टरपाद्यार्घाचमनमधुपर्कवस्त्रयज्ञोपवीतगन्धपुष्पालङ्करणादिभिर्वरम्प्रपू-
जयेत् अथानन्तरन्तिष्ठन् वरोऽर्कवृक्षम्वस्त्रेण कार्पासतन्तुसूत्रेण वा पञ्चवा-
रञ्चतुर्वारम्वा वेष्टयित्वा तस्मिन्सूर्यदेवतामध्यारोप्य आकृष्णेनरजसा० पश्चय-

न्नित्यनेनावाहनादिदक्षिणान्तं तां सम्पूज्य प्रार्थयेत् । त्रिलोकवासिन्सप्ताश्व
छायया सहितो रवे । तृतीयोद्वाहजन्दोषन्निवारय सुखङ्कुरु १ जलेनत्रि-
वारं सिञ्चेत् ममप्रीतिकरायेयम्मया सृष्टापुरातनी। अर्कजा ब्रह्मणा सृष्टा
ह्यस्माकम्प्रतिरक्षतु इति प्रदक्षिणीकुर्वन् जपेत्। नमस्ते मङ्गले देवि नमस्स-
वितुरात्मजे। त्राहि मांकृपया देवि पत्नी त्वम्मे इहागता १ अत्र कातीया-
नाम्वेद्यामग्निप्रतिष्ठापूर्वकम्विवाह उच्यते । अतः कारणात् उत्तरदिग्-
भागे सम्पादिते स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य ततः पश्चिममुख-
स्साक्षाद्वरस्तिष्ठन्नर्कम्प्रार्थयेत्। अर्क त्वं ब्रह्मणा सृष्टस्सर्वप्राणिहिताय च।

वृक्षाणामादिभूतस्त्वन्देवानाम्प्रीतिवर्द्धनः १ तृतीयोद्वाहजन्दोषम्मृत्युञ्चाशु-
विनाशय। ततो द्विजैर्मङ्गलाष्टकानि पठितव्यानि तदेवलग्नान्ते ॐप्रतिष्ठे-
त्यन्ते अन्तःपटमुत्तरतो निस्सार्य अर्कस्योपरि अक्षतानि क्षिपेत् प्राङ्मु-
खोर्कसमीपे तिष्ठेत् तत आचार्यस्सूत्रेण वरार्कौ परित्वागिर्वणो० गायत्र्यावा
तत्सवितु० प्रचोदयात् अनेन चतुर्वारम्पञ्चवारम्वावेष्टयित्वा सर्वैस्सुलग्नङ्का-
र्यम् वरार्क्योस्सुलग्नमस्तु तृतीयोद्वाहजदोषपरिहारोऽस्तु ततश्च कन्यावरणा-
न्त्रिपुरुषङ्कुलमुच्चरेत्। आदित्यस्सविताचार्कः पुत्रीपौत्रीच नप्तिका। गो-
त्रङ्काश्यपइत्युक्त्वा लोके लौकिकमाचरेत्। अनेन प्रमाणेन कन्यादानवत्कार्यम्

तद्यथा आचार्यः आचमनप्राणायामदेशकालकीर्तनान्ते अस्य तृतीयोद्वाहजदोषपरिहारार्थम्ब्राह्म्यविवाहविधिना आर्कीदानमहङ्करिष्ये आर्कीशाखोपरि वरहस्ते शिवाआपस्सन्तु सौमनस्यमस्तु तृतीयोद्वाहजदोषपरिहारोऽस्तु दीर्घमायुश्शान्तिःपुष्टिस्तुष्टिश्चास्तु काश्यपगोत्रस्य काश्यपावत्सारनैध्रुवेति त्रिप्रवरस्य आदित्यस्य प्रपौत्रीम् सवितुः पौत्रीम् अर्कस्य पुत्रीम् अमुकगोत्रस्य अमुकत्रिप्रवरस्य अमुकशर्मणः प्रपौत्राय अमुकशर्मणः पौत्राय अमुकशर्मणः पुत्राय अमुकशर्मणे वराय तुभ्यमहं सम्प्रददे इति सकृत् त्रिवारम्वा इति कन्यादानम् ॥ अर्ककन्यामिमाम्विप्र यथाशक्तिविभूषिताम् ॥

गोत्राय शर्मणे तुभ्यं दत्तामिविप्र समाश्रय १ इति वरम्प्रतिवदेत् वरस्तु स्वस्तीत्युक्त्वा वेष्टितसूत्रमूर्द्धन्निष्काश्य तेन बृहत्सामतत्रभवद्वृष्ण्यन्त्रिष्टुभौयः शुभितमुग्रवीरम् इन्द्रस्तोमेन पञ्चदशेन मध्यमिदम्वातेन सगरेण रक्षा इति मन्त्रेण हस्ते कङ्कणम्बध्नीयात् ततोऽर्कात्स्थण्डिलाद्वा चतुःकोणेषु सवस्त्रङ्-कुम्भचतुष्टयं संस्थाप्य त्रिःसूत्रेण वेष्टयेत् जलहरिद्राकुङ्कुमगन्धपुष्पफल-हिरण्यरत्नादिभिः पूरितेषु सुवर्णनिर्मितां पृथक् पृथक् प्रतिमामावाहनादि-दक्षिणान्तन्नाममन्त्रेण पुरुषसूक्तेन वा पूजयेत् वेदविद्भिश्चतुर्भिर्ब्राह्मणैः शुभ-सूक्तानि पठितव्यानि वरस्तु ततो होमङ्कुर्यात् आचमनप्राणायामदेशका-

लकीर्त्तनान्ते अर्कविवाहाङ्गभूतं होमङ्करिष्ये इति सङ्कल्पः पूर्वेण ब्रह्मणो गमनमित्यादि पद्धत्युक्तप्रकारेणैव पूर्णपात्रान्तम्विकल्पः तत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अथ प्रधानम् बृहस्पतिम् अग्निम् अग्निम् वायुम् सूर्यम् प्रजापतिम् एता आज्येन अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नी-वरुणौ अग्निम् वरुणम् सवितारम् विष्णुम् विश्वान्देवान् मरुतस्स्वर्कान् वरुणम् ऋतासाहम् ऋतधामानमित्यादिपद्धत्युक्तम् सर्वं स्विष्टकृदन्तङ् कुर्यात् ततो ब्रह्मवरणाद्याघारावाज्यभागान्तङ्कृत्वा प्रधानहोमः सन्नोभि-रित्यस्य अङ्गिराऋ० त्रिष्टुप्० बृहस्पतिर्देवता आज्यहोमे वि० १ ॐसन्नो-

भिराङ्गिरसोन् रक्षमाणोभगाइवेदर्यमाणन्निनायजनैर्मित्रो नदम्पतीअनक्तिबृ-
हस्पतेवाजयाशूंरिवाजौ स्वाहा इदम्बृहस्पतये० १ यस्मै त्वेतिवामदेवऋ०
त्रिष्टुप्० अग्निर्दे० आज्यहोमे विनि० यस्मैत्वाकामकामाय वयंसम्राड्य-
जामहे तमस्मभ्यङ्कामन्दत्वाथेदन्त्वङ्घृतम्पिव स्वाहा इदमग्नये० २ ततो
व्यस्तसमस्ताभिर्व्याहृतिभिर्होमः कार्यः यथा ॐ भूः स्वाहा इदमग्नये ॐ भुवः
स्वाहा इदम्वायवे न० ॐस्वः स्वाहा इदं सूर्याय० ॐभूर्भुवः स्वः स्वाहा इदम्प्र-
जापतये ततोऽष्टाहुतयः ऋतासाहेत्यादि स्विष्टकृदन्तहोमः कार्यः जया-
कृताकृतमेवकार्यन्नकार्यम् संस्रवप्राशनादिप्रणीताविमोकान्ते द्विजैः कुम्भ-

स्थोदकप्रणीतोदकाभ्याम्वरायाभिषेकः कार्यः यथा विप्राः कुशाग्रैस्सपल्लवैः
तत्र देवस्यत्वा ३ सोमस्यत्वा १ पञ्चेन्द्रैः पञ्चवारुणैः पुरुषसूक्तेन १६ दश-
गायत्र्या १० विभ्राट् १७ ऋचं वाचं सर्वत्रैताभिर्ऋग्भिर्वरमभिषिञ्चन्ति वरः
पुनः प्रदक्षिणङ्कृत्वा मन्त्रमेतमुदीरयेत्। मयाकृतमिदङ्कर्मस्थावरेषु जरा-
युणा। अर्कापत्यानि नो देहि तत्सर्वं क्षन्तुमर्हसि। इत्युक्त्वा शान्तिसूक्तानि
जप्त्वा च विसृजेत्पुनः २ गोयुग्मन्दक्षिणान्दद्यादाचार्याय च भक्तितः। इत-
रेभ्योऽपि विप्रेभ्यो दक्षिणाञ्चापि शक्तितः ३ तत्सर्वङ्गुरवे दद्यादन्ते पुण्याह-
माचरेत्। चतुर्थे दिवसेऽतीते पूर्ववत्तां प्रपूज्य च ४ इति ब्रह्मपुराणे वि-

सृज्यहोममग्निञ्च विधिना मानुषीम्पराम्। उद्वहेदन्यथानैव पुत्रपौत्राभि-वृद्धिमान्। एवमेवद्विजश्रेष्ठो विधिना सम्यगुद्वहेत्। धनधान्यसमृद्धिञ्च इच्छाशक्तिम्पराम्व्रजेत्॥ इति श्रीसप्तर्ष्युपाख्यनरहरिविरचिते संस्कारनृसिंहे अर्कविवाहविधिः समाप्तः॥

ॐतत्सच्छ्रीगुरुचरणकमलार्पणमस्तु॥



# अथ सप्तर्षुपाख्यनरहरिभट्टविरचितस्संस्कारनृसिंहः ।

श्री ५ महाराज सर कृष्णप्रतापशर्म्म साही बहादुर के. सी. आइ. ई.

इत्युत्राधीशाज्ञया अधिकारिजनोपकारार्थङ्काश्याम्मेडिकल् हालाख्य-
यन्त्रालये मुद्रयित्वा प्रकाशितः ।

सम्वत् १९५० चैत्रकृष्ण एकादश्याम् सोमे ।

॥ ओ३म् ॥

# अथानुक्रमणिका




| | प० | पृ० | पं० |
|---|---|---|---|
| मङ्गलाचरणम् | १ | १ | १ |
| संस्कारप्रकारकथनम् | १ | १ | ४ |
| संस्काराधिकारिणः | १ | १ | ८ |
| गृह्यकारिकोक्तसंस्काराः | १ | २ | २ |
| तत्राप्यधिकारिणः | १ | २ | ५ |
| संस्कारफलम् | १ | २ | ६ |

| | प० | पृ० | पं० |
|---|---|---|---|
| तत्रमूलम् | १ | २ | ८ |
| प्रथमर्तौ निन्द्यमासादयः | २ | १ | १ |
| तत्र वस्त्रविचारः | २ | १ | ७ |
| गृहविचारः | २ | १ | ७ |
| प्रथमर्तौ स्त्रीसेव्यपदार्थाः | २ | १ | ८ |
| द्वितीयादिऋतुप्राप्तौ वर्जनीयानि | २ | १ | ८ |

| | प० | पृ० | पं० |
|---|---|---|---|
| रजस्वलानियमाः | २ | २ | २ |
| प्रथमर्तौ चतुर्थेऽह्निभर्तृगमननिषेधः | २ | २ | ४ |
| प्रथमर्तौशान्तिविचारः | २ | २ | ५ |
| शान्तिविधिः | २ | २ | ७ |
| तत्र नारदोक्ताशान्तिः | ३ | १ | ५ |
| वशिष्ठोक्ताशान्तिः | ३ | २ | ४ |

| | प० | पृ० | पं० |
|---|---|---|---|
| वराहपुराणोक्ताशान्तिः | ४ | २ | ३ |
| अकालेदुष्टरजसिवस्त्र-त्यागपूर्विकाशान्तिः | ५ | २ | ६ |
| शौनकोक्ताशान्तिः | ६ | १ | ५ |
| शान्तिचतुष्टये का कैः कार्येतिनिर्णयः | ६ | १ | ८ |
| गर्भाधाने कालविचारः | ६ | २ | १ |

| | प० | पृ० | पं० |
|---|---|---|---|
| गर्भाधानविधिः | ६ | २ | ७ |
| गर्भाधानाकरणे प्रायश्चित्तम् | ८ | १ | ४ |
| पुंसवनम् | ८ | १ | ६ |
| सीमन्तोन्नयनम् | ९ | २ | ६ |
| सीमन्तोन्नयनस्यावश्यकता | १५ | २ | १ |

| | प० | पृ० | पं० |
|---|---|---|---|
| गर्भिणीधर्म्माः | १५ | २ | ५ |
| गर्भिणीपतिधर्म्माः | १६ | २ | १ |
| जातकर्म्म | १६ | २ | ७ |
| अवरावपतनम् | १७ | १ | ३ |
| जातकर्मविधिः | १७ | १ | ६ |
| आयुष्यकरणम् | १८ | २ | ७ |
| काम्यकुमाराभिमर्शनम् | १९ | १ | ८ |

| | प० | पृ० | पं० |
|---|---|---|---|
| जातकर्म्मकालातीले-नियमः | २० | १ | ६ |
| मातृसंस्कारपूर्वकस्तन-दानविधिः | २० | २ | १ |
| पुत्रोत्सवेसुवर्णादिदानम् | २१ | १ | १ |
| नालच्छेदनम् | २१ | १ | ४ |

| | प० | पृ० | पं० |
|---|---|---|---|
| सूतिकाग्निरः प्रदेशेऽउद-पात्रस्थापनम् | २१ | १ | ५ |
| सूतिकाद्वारदेशोदशादि-नहोमविधिः | २१ | २ | १ |
| जातकर्माङ्गब्राह्मण-भोजनम् | २२ | १ | ३ |

| | प० | पृ० | पं० |
|---|---|---|---|
| जन्मारिष्टनिवारको-ग्रहादिदानकालः | २२ | १ | ५ |
| जातकर्मावश्यकता | २२ | १ | ५ |
| कुमारग्रहोपशान्तिः | २२ | १ | ८ |
| साग्निकसूतिकायालौ-किकाग्निपक्काशन-विधानम् | २२ | २ | ८ |

| | प० | पृ० | पं० |
|---|---|---|---|
| जननाशौचेपित्रादि-शुद्धिः | २३ | १ | २ |
| महारक्षाविधानम् | २३ | १ | ६ |
| षष्ठीपूजनम् | २३ | २ | १ |
| नामकरणम् | २५ | १ | १ |
| पालकारोहः | २७ | २ | ५ |
| दुग्धपानम् | २७ | २ | ८ |

| | प० | पृ० | पं० |
|---|---|---|---|
| निष्क्रमणम् | २८ | १ | ३ |
| साग्निकप्रवासगमना-गमनविधिः | २९ | १ | ३ |
| उपवेशनम् | ३१ | १ | ८ |
| अन्नप्राशनम् | ३२ | १ | ३ |
| चूडाकरणम् | ३४ | १ | ८ |
| स्त्रीचूडाकरणेविशेषः | ३९ | २ | २ |

| | प० | पृ० | पं० |
|---|---|---|---|
| कर्णवेधः | ४० | १ | १ |
| अक्षरारम्भः | ४० | २ | ६ |
| अतिक्रान्तसंस्कारविधिः | ४१ | १ | ६ |
| उपनयने कालविचारः | ४३ | १ | ३ |
| उपनयनप्रयोगः | ४४ | १ | ५ |
| उपनयनेबटोर्वैदिका | ४५ | १ | १ |

| | प० | पं० | पृ० |
|---|---|---|---|
| सावित्रीप्रदानविधिः | | | |
| तत्कालनियमश्च | ५० | १ | ७ |
| बटोरभिवादनम् | ५२ | १ | ५ |
| भिक्षाचरणप्रकारः | ५२ | २ | ४ |
| ब्रह्मचारिनियमाः | ५३ | १ | ३ |
| वेदारम्भः | ५३ | २ | ५ |
| ब्रह्मलोपप्रायश्चित्तानि | ५५ | २ | ३ |

| | प० | पृ० | पं० |
|---|---|---|---|
| केशान्तकर्म | ५६ | १ | ४ |
| ब्रह्मचारिव्रतलोपे- प्रायश्चित्तम् | ५६ | २ | ५ |
| समावर्तनम् | ५६ | २ | ७ |
| स्नातकनियमाः | ६३ | २ | ३ |
| तत्र त्रिरात्रेविशेषः | ६४ | १ | ५ |
| विवाहेकन्यावरविचारः | ६४ | २ | ५ |

| | प० | पृ० | पं० |
|---|---|---|---|
| विवाहेकालनिर्णयः | ६५ | २ | २ |
| वाग्दानविधिः | ६६ | २ | १ |
| हरिद्रारोपणम् | ६८ | २ | ३ |
| तदुपयोगिमण्डपादि- विधानम् | ६८ | २ | ६ |
| विवाहोपयोगिगणप- त्यादिपूजनम् | ६९ | १ | ६ |

| | प० | पृ० | पं० |
|---|---|---|---|
| कन्यागृहेवरगमनम् | ६९ | २ | ८ |
| कन्याद्वारे वरपूजनम् | ७० | १ | १ |
| विवाहप्रयोगः | ७० | १ | ३ |
| विवाहाग्निनाशेप्रायश्चित्तम् | ९० | १ | ७ |
| सैरिन्ध्रीदानम् | ९० | २ | २ |

| | प० | पृ० | पं० |
|---|---|---|---|
| शिष्टाचारप्राप्तन्यूतमुपलपुत्रकदानञ्च | ९० | २ | २ |
| चतुर्थीकर्म | ९२ | १ | ३ |
| देवकोत्थापनम् | ९४ | २ | २ |
| वधूप्रवेशः | ९५ | १ | ६ |
| मार्गेरथादिभङ्गे प्रायश्चित्तम् | ९५ | २ | ७ |

| | प० | पृ० | पं० |
|---|---|---|---|
| राज्ञोयानभेदेविशेषः | ९७ | २ | ४ |
| अर्कविवाहविधिः | ९८ | १ | १ |
| कातीयानांविशेषः | ९९ | १ | ५ |


॥ इति संस्कारनृसिंहस्यानुक्रमणिका समाप्ता ॥



श्रीगणेशाय नमः ॥ ॥ श्रीलक्ष्मीनृसिंहाय नमः ॥ विश्वोत्पत्तिस्थितिलयायन्मायालेशतः किल ॥ सच्चित्सुखैकरूपन्तं स्वात्मानन्नृहरिन्नुमः ॥ १ ॥ गर्भाधानादिसँस्कारन्नृसिंहो ऽज्ञानदैत्यहा ॥ स्फुरत्वयं सताञ्चित्ते नित्यं सत्कर्मदर्शनः ॥ २ ॥ ते च सँस्कारा द्विविधाः ब्राह्मा दैवाश्च तत्र ब्राह्मा गर्भाधानाद्याः पाकयज्ञाद्या दैवाः अत्र तु गर्भाधानाद्या अनुष्ठेयरूपेणोच्यन्ते ते च षोडश ॥ गर्भाधानम्पुंसवनं सीमन्तो जातकर्म च ॥ नामक्रियानिष्क्रमोऽन्नप्राशनम्वपनक्रिया ॥ कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः ॥ केशान्तस्नानमुद्वाहो विवाहाग्निपरिग्रहः ॥ त्रेताग्निसङ्ग्रहश्चैव सँस्काराः षोडश स्मृताः ॥ नवैताः

कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः ॥ विवाहो मन्त्रवत्तस्याः शूद्रस्यामन्त्रतो
दश ॥ इति व्यासोक्ताः ॥ गृह्यकारिकायान्तु ॥ गर्भाधानम्पुंसवनं सीमन्तोन्नय-
नन्ततः ॥ जातकर्माभिधानञ्च निष्क्रमः प्राशनङ्क्रमात् ॥ चूडोपनयनं वेदव्र-
तानाञ्च चतुष्टयम् ॥ गोदानमेखलोन्मोकौ विवाहः षोडशक्रियाः इत्युक्ताः ॥
त्रयोदशानामाद्यानामधिकारी पिता भवेत् ॥ इतरेषान्त्रयाणां स्यादधिकारी
स्वयं सुतः ॥ गर्भाधानादिसँस्कारैर्विवाहान्तैः समानताम् ॥ गच्छेत्सायुज्यता-
म्विप्रो मुनीनाञ्च सलोकताम् ॥ वैदिकैः कर्मभिः पुण्यैर्निषेकाद्यैर्द्विजन्मनाम् ॥
कार्यः शरीरसँस्कारः पावनः प्रेत्यचेह चेति ॥ अत्र स ब्रह्मणा सायुज्यमाप्नो-

तीत्यादिगौतमादि वाक्यम्मूलमनुसन्धेयम् ॥ तत्रादौ गर्भाधानम्वक्तुन्तदुपयो-
गिप्रथमर्तौ निन्द्यमासादि तच्छान्तिरजस्वलाधर्मांद्युच्यन्ते चैत्रज्येष्ठाषाढभा-
द्रपदकार्तिकपौषाधिकमासाः प्रतिपत्षष्ठ्यष्टमी द्वादशीरिक्ताऽमातिथयः
रविभौमशनैश्चरवाराः भरण्याद्रश्लेषामघापूर्वात्रयविशाखाज्येष्ठानक्षत्राणि
कृत्तिकापुनर्वस्वऽनुराधारेवत्यो मध्यमानि परिघपूर्वार्द्धव्यतीपातवैधृतयो
योगाः भद्राकरणग्रहणसङ्क्रान्तिसन्ध्यारात्रिगण्डान्तादयः कालाः मेषसिंह-
मकरकुम्भलग्नानि ॥ श्वेतपीतनूतनभिन्नवस्त्रम् भर्तृगृहान्यगृहाः शुचयःप्रदे-
शाः ॥ प्रथमरजसि हरिद्रागन्धपुष्पताम्बूलानि रजस्वलाभिः सेव्यानि ॥ द्विती-

यादौ अञ्जनाभ्यञ्जने स्नानम्वासश्च दन्तधावनम् ॥ गन्धमाल्यन्दिवास्वापन्ता-
म्बूलं वर्जनीयकम् ॥ हस्ते मृन्मयपात्रे वा कटुतिक्ताम्लवर्ज्जितम् ॥ हविष्यम्म-
धुरञ्च लघु दिवैव भोक्तव्यम् एकान्ते कम्बलाद्यास्तृतभूमौ शेतव्यम् चतुर्थेऽह्नि
पञ्चरे कोष्णोनोदकेन स्नात्वाऽर्कभर्तृश्वशुरदर्शनङ्कर्त्तव्यम् भर्तृशय्याशयनम्वर्ज-
नीयम्॥ अथ पञ्चमे दिवसे तत्र भद्रादिसत्वेऽन्यस्मिन् शुभे दिने अमासङ्क्रा-
न्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेदिति गर्गवाक्यात् एवज्ञातकर्मनामक-
र्म्मापि भर्ता भार्यया सह कृतमङ्गलस्नानः कृतनित्यक्रियः ब्राह्मणैः सह शुचिदे-
शोपविष्टः आचमनत्रयप्राणायामत्रयान्ते अस्याः मम भार्यायाः निन्द्यमासादि

रजोदर्शनजनिताशुभनिवृत्तिद्वारा शुभसन्तानवृद्ध्यर्थं सग्रहां शान्तिङ्करिष्ये ॥
इति सङ्कल्प्य तदङ्गतया स्वस्तिवाचनम्मातृकापूजनम्वसोर्द्धारापूजनमायु-
ष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थङ्गणपतिपू-
जनमहङ्करिष्ये इति सङ्कल्प्य तानि कृत्वा आचार्यम्ब्रह्माणमृत्विजश्चतुरो
वृणुयात्। निन्द्यर्क्षतिथिवारेषु यदि पुष्पम्प्रदृश्यते ॥ तत्र शान्तिम्प्रकुर्वीत घृ-
तदूर्वातिलाक्षतैः ॥ प्रत्येकमष्टशतञ्च सावित्र्या जुहुयात्ततः ॥ स्वर्णगोभूति-
लान्दद्यात्सर्वदोषापनुत्तये इति नारदोक्तेः अग्निप्रतिष्ठाङ्ग्रहपूजाङ्कृत्वा तत्र
प्रजापतिम् इन्द्रम् अग्निं सोमम् आज्येन नवग्रहान् भुवनेशीङ्घृतदूर्वाति-

लयवैः अग्निं स्विष्टकृतं हविःशेषेण अग्निम्वायुमित्यादिप्राकृतम् इत्यन्वा-
धाय ब्रह्मवरणाद्याज्यभागान्ते यथाशक्ति नवग्रहहोमान्ते च गायत्रीमन्त्रेण
प्रत्येकङ्घृतदूर्वातिलयवैश्चतुर्भिर्ऋत्विग्भिर्होममष्टोत्तरशतङ्कृत्वा सुवर्णगो-
भूतिलान्यथाशक्ति दद्यादित्येतावत्येव नारदोक्ता शान्तिः ॥ वशिष्ठसंहिता-
यान्तु चण्डाली पतिता समाथरजकी शूद्रादिनादिक्रमाच्छुद्धा पुष्पवती च
पञ्चमदिने हव्येषु कव्येषु च ॥ चेद्दृष्टेऽह्निनवोदकुम्भसलिलैः सन्मन्त्रितै रौ-
षधैः स्नानम्पापनुदं सपञ्चकलशैः कार्यं समृद्धैर्जनैः ॥ १ ॥ ऐशान्यतो गोमयम-
ण्डले च परिश्रितेऽग्नौ जुहुयाच्च दूर्वाम् ॥ युग्माङ्घृताक्ताञ्च समित्प्रमाणाङ्गा-

यत्रिसञ्ज्ञाष्टसहस्रसङ्ख्यम् ॥२॥ शतप्रमाणामथवाद्यहन्त्रीं शुभां यवैर्व्याहृ-
तिभिस्तिलैश्च ॥ ततः सुरान् भूमिसुरान् पितॄंश्च सन्तर्पयेदन्नसुवर्णरत्नैरिति ॥३॥
ऋत्विग्वरणानन्तरम्वाऽग्निप्रतिष्ठाग्रहपूजानन्तरं वा कलशस्थापनविधिना
पञ्चकलशस्थापनम् तत्र जलौषधिप्रक्षेपणान्तैर्देवस्यत्वेत्यादिभिरापोहिष्ठेति
तिसृभिरिमम्मेत्यादिभिर्वारुणैरुद्राध्यायेन चाभिषेकोऽधिक उक्तः ततः प्रजा-
पतिम् इन्द्रम् अग्निं सोमम् आज्येन नवग्रहान् आज्येन तिलैर्यवैः अग्निं
वायुं सूर्यं प्रजापतिम् तिलैःभुवनेशीं घृतदूर्वातिलयवैरष्टोत्तरसहस्रं शतम्वा
अग्निं स्विष्टकृतं हविःशेषेण अग्निं वायुमित्यादिप्राकृतमित्यन्वाधाय ब्रह्म-

वरणादि यथोक्तम् ततो होमो गायत्र्या प्रत्येकङ्घृतदूर्वाभिर्यवैस्तिलैरष्टोत्त-
रसहस्रमष्टोत्तरशतम्वा व्याहृतिभिश्च तिलहोमस्तावान्स्वर्णगोभूतिलदानम्
इत्येतावती वशिष्ठोक्ता शान्तिः॥ वाराहपुराणे तु शुभाशुभमासाद्युक्ता। अशु-
भश्चेद्रजः स्त्रीणाम्प्रथमतो हि दृश्यते॥ विधानन्तत्र कर्तव्यमरिष्टघ्नं विशेषतः॥१॥
पञ्चमे दिवसे स्नात्वा द्वाभ्यामप्यत्रमङ्गलैः॥ उष्णैश्च वारिभिः श्रेष्ठैः पञ्चपल्ल-
वसंयुतैः॥२॥ तिलतैलेन शुद्धेन शुभकल्केन वा पुनः॥ आह्निकञ्च विधिङ्कृत्वा
विधानन्तु समारभेत्॥ ३॥ शुभाचारसमायुक्तः श्रद्धया परयायुतः॥ स्थण्डि-
लञ्च ततः कृत्वा स्वस्तिवाच्या द्विजोत्तमैः॥४॥ अग्निप्रतिष्ठापूर्वञ्च हवनन्तत्र

कारयेत् ॥ अष्टोत्तरसहस्रञ्च जुहुयात्तिलसर्पिषा ॥ ५ ॥ प्रधानम्पायसम्प्रो-
क्तं सघृतञ्च सशर्करम् ॥ आकृष्णेनेति मन्त्रेण मूर्द्धानिञ्चेति वा पुनः ॥ ६ ॥ सूर्य-
सूक्तञ्जपेद्विद्वान् विष्णुसूक्तञ्चवा पुनः ॥ सूर्यपूजान्ततःकुर्यात्करवीरैः सुरक्तकैः ॥
७ ॥ धूपार्थङ्गुग्गुलन्दद्याद्दीपन्दद्यात्प्रयत्नतः ॥ वन्हेरुत्तरतो विद्वान् स्थापये-
त्कदलीं शुभाम् ॥ ८ ॥ हेम्नः पञ्चपलाढ्याञ्च पलस्यापि सुलक्षणाम् ॥ पलार्धेन
तदर्धेन तदर्द्धार्द्धेन वा पुनः ॥ ९ ॥ सुस्तम्भाम्पञ्चपत्राढ्याङ्कदलैश्च विराजि-
ताम् ॥ राशौ कृतप्रतिष्ठान्तु तण्डुलानान्नृपोत्तम ॥ १० ॥ तण्डुलानाम्परी-
माणमाढकानाञ्चतुष्टयम् ॥ दद्यात्ताम्विप्रवर्याय सवस्त्राञ्च सदक्षिणाम् ॥

११ ॥ अलङ्कृताय विदुषे श्रोत्रियाय कुटुम्बिने ॥ सुपत्रे सुभगे देवि रम्भे भास्करवल्लभे ॥ रक्ष मां रजसो दोषाद्दुष्टस्यास्य विगर्हितात् ॥ १२ ॥ दानेनानेन देवेशः सविता विश्वतोमुखः ॥ प्रीतो भवतु मे सद्यो दोषं हरतु दुष्करम् ॥ १३ ॥ आचार्य त्वम्महाभाग महादोषविनाशन ॥ दानस्यास्य प्रभावेण रजोदोषाच्च पाहि माम् ॥ १४ ॥ ततोऽभिषेचनङ्कार्यन्दम्पत्योश्च विशेषतः ॥ वेदविद्भ्यो धनन्देयं यथा शक्त्या च तर्पणम् ॥ १५ ॥ यस्मिन्वाससि तद्दृष्टं रजोदुष्टम्भयावहम् ॥ तद्वासो यत्नतस्त्याज्यन्ततः शान्तिकरम्भवेत् ॥ १६ ॥ अत्राप्यग्निप्रतिष्ठा ॥ ग्रहपूजानन्तरङ्करवीरैःसूर्यपूजानन्तरम्प्रजापतिम् इन्द्रम् अग्निं सो-

मम् एता आज्येन नवग्रहान् पायसेन सूर्यम्भौमञ्च पायसेन शेषेणाग्निं स्विष्ट-
कृतम् अग्निम् वायुमित्यादिप्राकृतपायसं श्रपयित्वाऽऽज्यभागान्ते नवग्रहान्
यथाशक्ति हुत्वा आकृष्णेनेति सूर्यमष्टोत्तरशतम्मूर्द्धानन्दिव इत्यनेन च स्विष्ट-
कृदादि प्राकृतम् उक्तमन्त्रैः कदलीदानम् ततो दम्पत्योरभिषेकः वेदविद्भ्यो
दक्षिणादानम् इत्येतावत्येव वराहपुराणोक्ता शान्तिः॥ अन्यापि शौनकोक्ता॥
सार्तवानान्तु नारीणां शान्तिम्वक्ष्यामि शौनकः॥ द्रोणप्रमाणधान्येन व्रीहि-
राशित्रयम्भवेत्॥ १॥ कुम्भत्रयं न्यसेद्राशौ तन्तुवस्त्रादिवेष्टितम्॥ सूक्तेनाथ
नवचैन प्रसव आप इत्यथेत्यादि सा तु आश्वलायनानामेव प्राधान्येन भवति

याजुषैस्तूक्तशान्तित्रयेऽन्यतमां विधाय गर्भाधानङ्कार्यम् तद्यथा ऋतुदिनात् षोडशरात्रिषु आद्यचतुर्दिनामावास्याष्टमीपौर्णिमा चतुर्दशी सन्धिसङ्क्रान्तिव्यतीपातवैधृतिपरिघपूर्वार्द्धभद्राश्राद्धतत्पूर्वदिनमघामूलरेवत्यश्विनीभरण्यश्लेषाश्रवणधनिष्ठानिधनजन्मताराराहितासु चन्द्रतारानुकूलासु समासु रात्रिषु कार्यम् विषमे राशौ नवांशे च गुरुचन्द्रार्कलग्नेषु बलिष्ठेषु च केन्द्रत्रिकोणेषु शुभेषु त्रिषडायेषु पापेषु च लग्नस्त्विना विषमस्थाने शनैश्चरे च कार्यम् तत्र कर्ता पत्न्यासह कृतमङ्गलस्नानः तस्मिन्नुदके आदित्यङ्गर्भम्पयसा चीयमानः। इत्यादित्यमवेक्षते स्वलङ्कृतः कृतनित्यक्रियः शुचौदेशे आचमनप्रा-

णायामन्त्रयान्ते देशकालसङ्कीर्तनान्ते च अस्याः मम भार्यायाः प्रतिगर्भसं-
स्कारातिशयद्वारा अस्याञ्जनिष्यमाणसर्वगर्भाणाम्बीजगर्भसमुद्भवैनोनिबर्ह-
णद्वारा श्रीपरमेश्वरप्रीत्यर्थङ्गर्भाधानाख्यङ्कर्माहङ्करिष्ये तदङ्गतया स्वस्तिवा-
चनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्च करिष्ये तत्रा-
दौ निर्विघ्नतासिद्ध्यर्थङ्गणेशपूजनमहङ्करिष्ये ॥ इति सङ्कल्प्य तानि कृत्वा
दम्पती स्निग्धमधुराहारावलङ्कृतौ दक्षिणनासावहे वायौ पूर्वोक्तलग्ने शय्या-
मधिरोहतः तत्र पतिः तस्या उभावूरू प्रसार्य्य दक्षिणेन पाणिना प्रजास्थान-
न्तूष्णीमभिमृश्य पूषाभगꣳ सविता मे ददातु रुद्रः कल्पयतु ललामꣳ विष्णु-

सं. न्त्र.
१

योनिङ्कल्पयतु त्वष्टारूपाणि पिंशतु ॥ आसिञ्चतु प्रजापतिर्द्धाता गर्भन्द-
धातु ते ॥ गर्भन्देहि सिनीवाली गर्भन्धेहि पृथुष्टुके ॥ गर्भन्ते अश्विनौ देवा-
वाधत्ताम्पुष्करस्रजौ ॥ इति जपेत् ॥ तेजो वैश्वानरो दद्यात् इति च ब्रह्मा
गर्भन्दधातु ते ॥ इति ब्रह्माऽनुमन्त्रणम् ॥ धर्माविरुद्धचुम्बनदशनाभिघात-
पुरस्सरं सानन्दन्दक्षिणकर्णस्थयज्ञोपवीतः प्राङ्मुखो मन्थेत् स्रावणङ्कु-
र्यात् शौचस्नानाचमनानि कृत्वा अथास्याः दक्षिणांसं समधिहृदयं यत्ते-
सुसीम इत्यस्य प्रजापतिर्ऋषिः जगतीछन्दः हृदयन्देवता हृदयालम्भने
विनियोगः यत्तेसुसीमेहृदयन्दिविचन्द्रमसिश्रितं वेदाहन्तन्मान्तद्विद्यात्प-

षो. क.

१

पश्येमशरदः शतञ्जीवेमशरदः शतꣳ शृणुयामशरदः शतमिति मन्त्रेणालभते ततो गर्भाधानाङ्गतया विहितान्दशब्राह्मणानहम्भोजयिष्ये इति सङ्कल्प्य तान् भोजयेत् श्राद्धादि तु प्रथमर्तुगर्भाधाने हृदयालम्भनन्तु प्रत्यृतु गमने आगर्भधारणाद्गर्भाधानाकरणे प्रायश्चित्तम् ॥ गर्भाधानस्याकरणात्त-स्याज्ञातस्तु दुष्यति ॥ अकृत्वा गान्द्विजे दत्वा कुर्यात्पुंसवनम्पतिः ॥ इति गर्भाधानम् ॥ अथ पुंसवनम् ॥ तच्च गर्भचलनात्पुरा मासे द्वितीये तृतीये वा शुक्लपक्षे रिक्ताऽमा पौर्णिमा वर्जिततिथौ रविभौमगुरुवारे मृगपुनर्वसु-पुष्यहस्तमूलश्रवणनक्षत्रे मिथुनातिरिक्तविषमे लग्नेंशे च क्रूरग्रहरहितके-

न्द्रत्रिकोणे शुभग्रहे भार्यामुपवासङ्कारयित्वा ऽऽप्लाव्याहते वाससी परि-
धाप्य स्वयञ्च कृतनित्यक्रिय आचम्य देशकालकीर्तनान्ते अस्याम्मम भा-
र्यायामुत्पत्स्यमानगर्भस्य वैजिकगार्भिकदोषपरिहारपुरुषज्ञानोदयप्रतिरो-
धिपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थम् क्षेत्रसँस्काररूपम्पुंसवनाख्यङ्कर्माह-
ङ्करिष्ये तदङ्गतया स्वस्तिवाचनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्र-
जपन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थङ्गणपतिपूजनमहङ्क-
रिष्ये तानि कृत्वा तृतीये मासे पुंसवनम् ॥ न्यग्रोधस्यावरोहानां शुङ्गाना-
मेव पेषणम् ॥ विकृत्याभिमन्त्रणमेतान्वैकल्पिकपदार्थानहङ्करिष्ये ॥ हिरण्य-

गर्भं अद्भ्यः सम्भृत इत्यनयोः क्रमेण प्रजापत्युत्तरनारायणौ ऋषी त्रिष्टुप् छन्दः प्रजापतिपुरुषौ देवते आसेके विनियोगः सुपर्णोसीति प्रजापति० आकृती० गरुत्मान्देवता अभिमन्त्रणे० इत्यृष्यादि स्मृत्वा वटस्यावरोहान् अधोभागाङ्कुरान् शुङ्गानूर्ध्वाङ्कुरांश्च निघायामुदपेषम्पिष्ट्वा उदकं यथा भवति तथा पिष्ट्वा सूक्ष्मवस्त्रेण पीडितम्भार्याया दक्षिणस्यान्नासिकायाम्पतिः हिरण्यगर्भ० हविषाविधेम १ अद्भ्यः सम्भृत० मग्रे २ इतिमन्त्राभ्यामासिञ्चति स यदि कामयेत वीर्यवान्स्यादयङ्गर्भस्तदा तस्या अङ्के उदपूर्णं शरावन्निधाय गर्भं सुपर्णोसि० स्वः पत १ अनेनाभिमन्त्रयते ततः पुंसवनाङ्गतया

विहितान्दशब्राह्मणान् भोजयिष्ये इति तान् भोजयेत् ॥ एतदेव पुरागर्भच-
लनादकृतं यदि ॥ सीमन्तात्प्राग्विधातव्यं स्पन्दितेऽपि बृहस्पतिरिति कारि-
कोक्तेः सीमन्तोन्नयनात्प्रागेतस्यानादिष्टत्वेनैव करणम् इदं सीमन्तोन्नयनञ्च
गर्भसंस्कारस्तेन प्रतिगर्भङ्कर्तव्य इति विष्णुककौ स्त्रीसंस्कारा एवैते तेन प्रति
गर्भन्नावृत्तिरिति हारीतदेवलौ पुंसवनन्तु दृष्टार्थत्वात्प्रतिगर्भमिति भाष्य-
कारः ॥ इति पुंसवनम् ॥ अथ सीमन्तोन्नयनम् ॥ तच्च षष्ठे वाप्यष्टमे
मासि पुंसवनोक्ते मुहूर्त्ते बहिः शालायाम्पत्न्या सह कृतमङ्गलस्नानः परिहि-
ताहतवस्त्रः स्वलङ्कृतस्स्वासने उपविश्याचम्य प्राणानायम्य देशकालौ स-

ङ्कीत्यास्याः मम भार्यायाः गर्भावयवाभिवृद्ध्यर्थं सीमन्तोन्नयनङ्कर्तुम् तद-
ङ्गतया विहितं स्वस्तिवाचनमविघ्नपूजनम्मण्डपदेवतापूजनम्मातृकापूज-
नम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नता-
सिद्ध्यर्थङ्गणेशपूजनमहङ्करिष्ये इति सङ्कल्पङ्कृत्वा हस्तमात्रे कुण्डे स्थण्डिले
वा कुशैः परिसमुह्य गोमयेनोपलिप्य स्फ्येनोल्लिख्यानामिकाङ्गुष्ठाभ्यामुद्धृत्या-
द्भिरभ्युक्ष्येति पञ्चभूसंस्कारान्कृत्वा स्त्रीसंस्कारपक्षे आवसथ्याग्निङ्गर्भसंस्का-
रपक्षे लौकिकाग्निं संस्थाप्य अग्नेः पश्चादुपविष्टस्स्वदक्षिणोपविष्टपत्नीकः
आचम्य अस्याः मम भार्यायाः तनुरुधिरप्रिया लक्ष्मीभूतराक्षसीगणदू-

रनिरसनत्तमसकलसौभाग्यादि निदानभूतमहालक्ष्मी समावेशनद्वारा प्रति-
गर्भम्बीजगर्भसमुद्भवैनोनिवर्हणजनकातिशयद्वारा परमेश्वरप्रीत्यर्थं स्त्री
संस्काररूपं सीमन्तोन्नयनाख्यङ्कर्माहङ्करिष्ये तत्रपूर्वेण ब्रह्मणो गमनमपरेण
पात्रासादनम् द्वे पवित्रे ताम्रमय्याज्यस्थाली ताम्रमयी चरुस्थाली पाला-
श्यस्समिधः प्राञ्चावाघारौ समिद्धतमे आज्यभागौ पूर्णपात्रन्दक्षिणा
प्रतिमहाव्याहृतिविनयनन्नियुक्तगाथागानम् एतान्वैकल्पिकपदार्थानहङ्क-
रिष्ये अथर्ष्यादि भूर्भुवस्स्वरितिमहाव्याहृतीनाम्प्रजापतिर्ऋषिः क्रमेण गाय-
त्र्युष्णिगनुष्टुपछन्दांसि अग्निवायुसूर्यादेवताः गार्हपत्याहवनीयाधाने

विनियोगः त्वन्नोऽग्ने सत्वन्नोऽग्नेऽयाश्चाग्ने येतेशतमितिमन्त्राणाम्वा-
मदेवऋषिःत्रिष्टुप् छन्दःअग्नीवरुणौ देवते प्रथमयोस्सौत्रामण्यवभृथे विनि-
योगः तृतीयस्याग्निर्दैवता चतुर्थस्य वरुणस्सविताविष्णुर्विश्वेदेवामरुतस्स्व-
र्कादेवताः अनादिष्टहोमे विनियोगः उदुत्तममित्यस्य शुनश्शेपऋषिः
त्रिष्टुप्छन्दः वरुणोदेवता पाशोन्मोके विनियोगः भूर्भुवःस्वरिति व्याहृतीनां
प्रजापतिऋषिः क्रमेण गायत्र्यादिछन्दांसि अग्निर्वायुस्सूर्यश्च देवताः अग्नेर्विनयने विनियोगः अ-
यमूर्जेत्यस्य प्रजापतिऋषिः बृहतीछन्दः फलिनीदेवता वेणीबन्धने विनियोगः
सोम एवेत्यस्य प्रजापतिऋषिः गायत्रीछन्दः सोमोदेवता गाथागाने विनि-

योगः ॥ अथ देवताभिधानम् ॥ तत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् एता
आज्येन प्रजापतिञ्चरुणा शेषेणाग्निं स्विष्टकृतम् अग्निम् वायुम् सूर्यम् अग्नी-
वरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुम्विश्वान्देवान्मरुतस्स्वर्कान्
वरुणम् प्रजापतिम् एताः पुनराज्येनैतादेवता अङ्गप्रधानार्था अस्मिन्कर्मण्य-
हं यक्ष्ये अग्नेरुदक्प्राङ्मुखम्ब्रह्माणं अस्मिन्कर्मणि त्वम्ब्रह्माभवेति ब्रह्मवर-
णम्भवामीति प्रतिवचनम् पूर्वेणाग्नेरागत्य दक्षिणत अग्न्यभिमुखमुपवेशनम्
अग्नेर्वायव्ये उत्तरतश्च कुशस्थापनञ्चमसन्दक्षिणेन वामे निधायोदकेनापूर्य
वायव्ये निधायालभ्योत्तरतः स्थापनम् प्रागाद्यग्नेः परिस्तरणन्निधायोदकेना-

पूर्यं वायव्ये निधायालभ्योत्तरतस्स्थापनम् प्रागाद्यग्नेः परिस्तरणम् ॥ उत्त-
रतः पश्चिमतो वा पात्रासादनम् पवित्रच्छेदनानि त्रीणि साग्रे पवित्रे द्वे
प्रोक्षणीपात्रम् ताम्रमय्याज्यस्थाली चरुस्थाली च सम्मार्गकुशास्त्रयः उप-
यमनकुशाश्च तिस्रः पालाश्यः समिधः स्रुवः आज्यम् त्रिःप्रक्षालितास्त-
ण्डुलाः तथा तिला मुद्गाश्च पूर्णपात्रञ्चेति ॥ अथोपकल्पनीयानि मृदुपीठम्
युग्मौदुम्बरफलयुक्तौदुम्बरीसमित् त्रीणि दर्भपिञ्जुलानि त्रेणी शलली बैल्वः
अश्वत्थो वा शङ्कुः शरेषीको वा शङ्कुः पूर्णपात्रम् वीणागाथिनौ
चेति ततः प्रादेशमात्रयोः प्रागग्रयोर्द्वयोरुदगग्रङ्कुशत्रयन्निधाय द्विमूलेन

द्भिप्रदक्षिणम्वेष्टयित्वा सर्वान्दक्षिणे धृत्वा वामाङ्गुलिभिश्छित्वा दक्षिण-
स्थानामुदङ्निरसनम् प्रणीतोत्तरतः प्रोक्षणीर्निधाय तत्र प्राणीतञ्जलन्त्रि-
र्निक्षिप्य पवित्राभ्यामुत्पूय ते तत्र निधाय प्रोक्षणीर्दक्षिणेन वामे कृत्वा द
क्षिणेनोद्दिङ्गनम् प्राणीतेन प्रोक्षणम् ततस्तज्जलेनाज्यस्थाल्याः प्रोक्षणम् च-
रुस्थाल्याः प्रोक्षणम् सम्मार्गकुशानाम्प्रोक्षणम् उपयमनकुशानाम्प्रो० समि-
धाम्प्रो० स्रुवस्य प्रो० आज्यस्य प्रो० तण्डुलानाम्प्रो० तिलानाम्प्रो० मुद्गानाम्प्रो०
पूर्णपात्रस्य प्रो० प्रणीताग्न्योर्मध्ये प्रोक्षणीर्निधाय आज्यस्थाल्यां स्वात्मा-
भिमुखमाज्यनिर्वापः चरुस्थाल्यां पवित्रे निधाय प्राणीतञ्जलन्त्रिर्निक्षिप्य

मुद्गप्रक्षेपः ब्रह्मणा दक्षिणत आज्याधिश्रयणम् यजमानेनोत्तरतश्चर्वधिश्रय-
णञ्च युगपत् उल्मुकेनेशानीतः उभयोः पर्यग्निकरणम् उदकोपस्पर्शनम्
अर्द्धशृते चरौ तण्डुलतिलप्रक्षेपो युगपत् शृते चरौ दक्षिणेनाधोमुखं स्रुव-
म्प्रतप्योदकस्पर्शनम् वामे उत्तानबिलं सम्मार्गकुशानामग्रैर्मूलादग्रान्तम्मू-
लैरधस्तादग्रान्मूलान्तं सम्मृज्य सम्मार्गान्निरस्य प्रणीतेनाभ्युक्ष्य पुनःप्रतप्य
उदकस्पर्शनम् स्वदक्षिणे निधानम् आज्यमुद्वास्य चरोः पूर्वेणानीय अग्नेरु-
दक् संस्थाप्य चरुमुद्वास्य आज्यस्य पश्चादानीय आज्योत्तरतो निधाय अग्नेः
पश्चादाज्यन्निधाय तदुत्तरतश्चरुनिधानम् पवित्राभ्यामाज्यमुत्पूयावेक्ष्याप-

द्रव्यन्निरस्य प्रोक्षणीस्तत्पूय पवित्रे तत्र निधायोपयमनकुशानादाय सव्ये कृत्वा दक्षिणेनाग्नौ प्रागग्रांस्तिष्ठन्समिधोऽभ्यादाय दक्षिणेन सपवित्राशेष-प्रोक्षणीजलेनेशानीत अग्नेः पर्युक्षणम् इतरथावृत्तिः प्रणीतासु पवित्रनि-धानम् सोपयमनकुशं सव्यहस्तं हृदये निधाय शङ्खमुद्रया घृतेन स्रुवेण जुहुयात् त्यागान्ते प्रक्षेपः तत्राग्नेरुत्तरभागे ऋजुम् दीर्घम् प्राञ्चम् सन्त-तम् मनसैव ब्रह्मणाऽन्वारब्धः ओम्प्रजापतये स्वाहा इदम्प्रजापतये नमम पात्रान्तरे संस्रवप्रक्षेपः तद्दक्षिणभागे तथैव ओं इन्द्राय स्वाहा इदमिन्द्राय नमम एतावाघारौ समिद्धतमे आज्यभागौ तौच ॐ अग्नये स्वाहा इदम-

ग्नये० ॐ सोमाय स्वाहा इदं सोमाय० ततश्चरुमभिघार्य स्रुवेणादाय अनन्वारब्धः ओम्प्रजापतये स्वाहा इदम्प्रजापतये० पुनरन्वारब्धश्चरोरुत्त-राद्धात् ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते नमम ॥ अथा-ज्येन ॐ भूः स्वाहा इदमग्नये० ॐ भुवः स्वाहा इदं वायवे० ॐ स्वः स्वाहा इदं सूर्याय० ॐ त्वन्नो अग्ने० मुमुग्ध्यस्मत् स्वाहा इदमग्नीवरु-णाभ्यान्न० ॐ सत्वन्नो अग्नेवमो० रधि स्वाहा इदमग्नीवरुणाभ्याम्० ॐ अयाश्चाग्ने० भेषजं स्वाहा इदमग्नये० ॐ येतेशतम्० स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च नमम ॥

उदुत्तमम्० अदितये स्याम स्वाहा इदम्वरुणाय० ओम्प्रजापतये स्वाहा इदम्प्रजापतये० ततः संस्रवप्राशनम् पवित्राभ्याम्मार्जनम् पवित्रप्रतिपत्तिः ब्रह्मणे पूर्णपात्रदानम् ॥ ब्रह्मन्नस्य सीमन्तकर्मणो ऽङ्गतया विहितमिदम्पूर्णपात्रन्तुभ्यमहं सम्प्रददे ॥ ब्रह्मा द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु इति प्रतिगृह्णीयात् प्रणीताविमोकः ततः पश्चादग्नेर्भद्रपीठ उपविष्टायाम्भार्यायां पतिः उपकल्पितयुग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जुलैस्त्रेण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण चेत्येतैः फलीकृतैस्सीमन्तमूर्द्धम् भूर्विनयामि भुवर्विनयामि स्वर्विनयामि इति प्रतिमन्त्रम्

विनयति ततो वेण्याम् अयमूर्ज्जावतो वृक्ष ऊर्जीवफलिनी भव इति बध्नाति ततो वीणागाथिनौ सोमं राजानं सङ्गायेतामिति प्रेषयति ॥ तौ च सोम एव नो राजेमामानुषीः प्रजाः । अविमुक्तचक्रऽआसीरंस्तीरेतुभ्यमसौ इति गायतः असौ स्थाने समीपवर्तिन्याः नद्याः हेगङ्गे यमुने इत्यादि नामग्रहणम् गर्भि-णी च यान्नदीमुपावसिता भवति तस्या नाम गृह्णाति गङ्गेत्यादि प्रथमा-न्तम् ततस्सीमन्तोन्नयनाङ्गतया विहितमेकस्मै ब्राह्मणाय भोजनं सम्प्र-दास्ये ततस्स्मृत्युक्तदशसङ्ख्याकेभ्यो ब्राह्मणेभ्यो भोजनं सम्प्रदास्ये इति च सङ्कल्प्य एकादशब्राह्मणान् भोजयेत् ततः पतिपुत्रवतीभिर्वृद्धाभिर्यथा

कुलाचारम्मङ्गलङ्कुर्यात् इदं स्वकाले न कृतञ्चेत्प्रसवपर्यन्तङ्कार्यम् तत्रापि न कृतञ्चेत्पुत्रन्तस्या अङ्के दत्वा कर्तव्यम् तदुक्तङ्कारिकायाम् ॥ सीमन्तोन्नयनम्मुख्यकाले न स्यात्कथञ्चन । कार्यमाप्रसवादेतदिति शङ्खो ऽब्रवीत्स्फुटमिति ॥ सत्यव्रतश्च स्त्रीयद्यकृतसीमन्तात्प्रसूयेत कथञ्चन । पुत्रङ्गृहीत्वा विधिवत्पुनस्संस्कारमर्हति इति ॥ अथ गर्भिणीधर्माः कारिकायाम् ॥ अङ्गारभस्मास्थिकपालचुल्ली शूर्पादिकेषूपविशेन्न नारी । सोलूखलाद्ये दृषदादिके वा यन्त्रे तुषाढ्ये न तथोपविष्टा ॥ नो मार्जनी गोमयपिण्डकादौ कुर्यान्न वारिण्यवमज्जनं सा । अङ्गारभूत्या न नखैर्लिखेत्क्ष्माङ्कलिस्व-

पुर्भङ्गमथो न कुर्यात् ॥ नो मुक्तकेशी विवशाथ वा स्याद् भुङ्क्ते न सन्ध्यावसरे न शेते । स्वप्यान्न याम्याचरणार्द्रपादा नाधः शिरोद्विग्नमना शुचिः स्यात् ॥ नामङ्गलम्वाक्यमुदीरयेत्सा शून्यालयम्वृक्षतलन्न यायात् । तिष्ठेन्न वल्मीकमथो न हिंस्याद्व्रतान्विता भर्तृहिते रता स्यात् ॥ तिष्ठेत्सुभूषादि-गुणैश्च युक्ता पुत्रम्प्रसूयाद्गुणशीलयुक्तम् । पाद्मेदितेः कश्यप आह धर्म-म्मात्स्येऽपि जातः सुरगर्भिणीनाम् ॥ तथा कश्यपः ॥ गर्भिणी कुञ्जरा-श्वादिशैलहर्म्यादिरोहणम् । व्यायामं शीघ्रगमनं शकटारोहणान्त्यजेत् ॥ शोकं रक्तविमोक्षञ्च साध्वसङ् कुक्कुटासनम् । व्यवसायन्दिवा स्वापं रात्रौ

जागरणन्त्यजेत् इति ॥ अथ गर्भिणीपतिधर्म्माः ॥ याज्ञवल्क्यः ॥ दौहृदस्या प्रदानेन गर्भो दोषमवाप्नुयात् । वैरूप्यम्मरणम्वापि तस्मात्कार्यम्प्रियं स्त्रियः ॥ आश्वलायनः ॥ वपनम्मैथुनन्तीर्थम्वर्जयेद्गुर्विणीपतिः । श्राद्धञ्च सप्तमान्मासादूर्द्ध्वन्नान्यत्र वेदविदिति ॥ अन्यत्रापि उदन्वतोऽम्भसि स्ना- नन्नखकेशादिकर्त्तनम् । अन्तर्वत्न्याः पतिः कुर्वन्न प्रजा जायते ध्रुवमिति ॥ इति सप्तर्ष्युपाख्याने नरहरिभट्टविरचिते संस्कारनृसिंहे सीमन्तोन्नयनं समाप्तम् ॥ अथ जातकर्म वक्तव्यम् तत्रादौ सूत्रकारोक्तम् ॥ सोष्यन्त्यभ्युक्षणम् अवरावपतनञ्चोच्यते ॥ सोष्यन्तीम्प्रसवशूलवतीम्पतिः अद्भिः रजतु दश-

मास्य इत्यस्य प्रजापतिर्ऋषिः महापङ्क्तिश्छन्दः गर्भो देवता अभ्युक्षणे विनियोगः ॥ एजतु दशमास्यो० सह यथायं० एजति एवायन्द० सह इत्यभ्युक्षति ॥ अथावरावपतनम् ॥ अवरो जरायुविशेषः तस्य अव अधः पतनम्पतनहेतुम्मन्त्रञ्जपति ॥ अवैतु पृश्नीत्यस्य प्रजा० बृहती० अग्निर्दैवता अवपतने विनियोगः ॥ अवैतु पृश्निशेवलꣳ शुने जराय्वत्तवे नैव माꣳसेनपीवरिनकस्मिꣳश्च नायतनमवजरायुपद्यताम् इति जपति ॥ अथ जातकर्म ॥ जातस्य कुमारस्याच्छिन्नायान्नाड्याम्पिता पुत्रस्य मुखन्निरीक्ष्य नद्यादौ स्नात्वा असम्भवे दिवा हृताभिः शीताभिरद्भिः सुवर्णयुताभिः

सचैलं स्नात्वा ऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ममास्य कुमारस्य जातकर्म कर्तुम् तदङ्गतया विहितं स्वस्तिपुण्याहवाचनम्मातृकापूजनं वसोर्द्धारापूजनम् आयुष्यमन्त्रजपम् आमद्रव्येण नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतार्थङ्गणपतिपूजनमहङ्करिष्ये इति सङ्कल्प्य कृत्वा पुनर्ममास्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिवर्हणायुर्मेधावृद्धिबीजगर्भसमुद्भ-वैनोनिवर्हणद्वारा जातकर्म करिष्ये तत्र घृतप्राशनम् दक्षिणकर्णसमीपे जपः वात्सप्रेणाभिमर्शः स्वयमनुप्राणनम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये ततो भूस्त्वयीत्यादीनाम्प्रजापतिः गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्निवायु-

सूर्या देवता: प्राशने विनियोगः अग्निरायुष्मानित्यादीनां सर्वेषां प्रजा०
गायत्री० लिङ्गोक्ता देवता आयुष्यकरणे विनियोगः त्र्यायुषमित्यस्य
नारायण० उष्णिक्छ० शिवो० आयुष्यकरणे विनियोगः दिवस्परीत्याद्ये-
कादशानां वात्सप्रीभालन्दन० त्रिष्टुप्छन्दः अग्निर्देवता अभिमर्षणे विनि-
योगः वेद त इत्यस्य प्रजा० अनु० भूमिर्दे० भूम्याभिमन्त्रणे विनियोगः
अश्मा भवेत्यस्य प्रजा० अनु० लिङ्गोक्ता० अभिमर्शने० इडासीत्यस्य प्रजा०
अनु० इडा दे० मात्रभिमन्त्रणे वि० इमꣳ स्तनमित्यस्य प्रजा० त्रिष्टु०
अग्नि० स्तनदाने० यस्ते स्तन इत्यस्य दीर्घतमा० त्रिष्टु० वाग्देवता स्तन-

दाने० आपो देवेष्वित्यस्य प्रजा० अनु० आपो० जलपात्रधारणे० शण्डा-
मर्का इति द्वयोः प्रजा० अनु० लिङ्गोक्ता० आवपने० इत्यार्षादि स्मृत्वा
ततस्तैजसपात्रे घृतमादाय अनामिकया सुवर्णान्तर्हितया ॐ भूस्त्वयि
दधामि ॐ भुवस्त्वयि दधामि ॐ स्वस्त्वयि द० ॐ भूर्भुवः स्वः सर्वन्त्व-
यि० इति कुमारं सकृत्प्राशयति एतस्य मेधाजननमिति नामधेयम् इदन्ना-
लच्छेदनात्प्राक् कृतञ्चेत्कालान्तरे न भवत्येव तस्मात्कुमारञ्जातङ्घृतस्यैवाग्रे
प्रतिलेहयन्ति स्तनम्वा ऽनुपधापयन्तीति श्रुतेः ॥ अथायुष्यकरणम् ॥
कुमारस्य नाभ्यान्दक्षिणे वा कर्णे कर्णसमीपे इत्यर्थः ॥ अग्निरायुष्मान्स्व-

नस्पतिभिरायुष्माँस्तेन त्वाऽऽयुषा ऽऽयुष्मन्तङ्करोमि सोम आयुष्मान्स ओष
धीभिरायुष्माँस्तेन त्वाऽऽयुषा ऽऽयुष्मन्तङ्करोमि ब्रह्मायुष्मत्त ब्राह्मणैरायु-
ष्मत्तेन त्वाऽऽयुषा युष्मन्तङ्करोमि देवा आयुष्मन्तस्ते ऽमृतेनायुष्मन्तस्तेन
त्वा० ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वा० पितर आयुष्मन्तस्ते
स्वधाभिरायुष्मन्तस्तेन त्वा० यज्ञ आयुष्मान्सदक्षिणाभिरायुष्माँस्तेन त्वा०
समुद्र आयुष्मान्स्स्रवन्तीभिरायुष्माँस्तेन त्वा० । इत्यष्टौ मन्त्राञ्जपति
त्रिवारम् ततस्त्र्यायुषम्० अस्तु त्र्यायुषम् इति च त्रिर्जपति इत्येतदायुष्य-
करणम् ॥ स पिता यदि कामयेत सर्वमायुरियादिति तर्हि वात्सप्रेणैन-

मभिमृशेत् यथा दिवस्परि० १ विद्माते० २ समुद्रे त्वा० ३ अक्रन्द० ४ श्रीणामुदारो० ५ विश्वस्य० ६ उशिक् पावको० ७ दृशानो रुक्म० ८ यस्ते ऽअद्य० ९ आतम्भज० १० त्वामग्ने० ११ ॥ इत्येकादशभिः कुमारमभिमृशेत्सर्वशरीरे इदमभिमर्शनङ्काम्यम् अथ प्रागादि प्रतिदिशम् नैर्ऋत्याञ्चेति पञ्च ब्राह्मणान् कुमाराभिमुखानवस्थाप्य तान् इममनुप्राणित इति पिता ब्रूयात् ॥ पूर्वः प्राण इति ब्रूयात् दक्षिणो व्यान इति अपरः अपान इति उत्तरः उदान इति नैर्ऋत्यां स्थित उपरिष्टादवेक्षमाणः पञ्चमः समान इति ब्रूयात् अविद्यमानेषु स्वयमेव तान्तान्दिशमनुपरिक्रामन् इममनु-

प्राणितेति प्रैषवर्जम् अनुप्राणनङ् कुर्यात् ॥ स कुमारो यस्मिन्देशे जातो भवति तन्देशम् वेद ते भूमिहृदयन्दिवि चन्द्रमसि श्रितम् । वेदाहन्तन्मान्तद्विद्यात्पश्येम शरदः शतञ्जीवेम शरदः शत ँ शृणुयाम शरदः शतम् ॥ इत्यभिमन्त्रयते ॥ अथैनङ् कुमारम् अश्मा भव परशुर्भव हिरण्यमस्तुतम्भव । आत्मावै पुत्रनामासि सजीव शरदः शतम् । इत्यभिमृशति मूर्ध्नीति कारिकाकारः हृदीति जयरामः सर्वशरीरे इति हरिहरः युक्तञ्चैतत् इदञ्जातकर्म दैवान्मानुषाद्वा प्रतिबन्धादतीतकालञ्चेत् तदाऽऽयुष्याद्यश्मा भवेति मन्त्रान्तम्भवत्येव वात्सप्राद्येतदन्तमित्यपरे युक्तन्तु आयुष्याद्ये-

तदन्तम् तस्मात्कुमारञ्ज्ञातमित्यादि प्राग् लिखितश्रुतिबलात् अथास्य मातरम्प्राङ्मुखीम्प्राञ्जलिरभिमुखः । इडासि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं वीरवती भव या ऽस्मान्वीरवतोऽकरदित्यभिमन्त्रयते मन्त्रश्रावणेन संस्करोति अथास्यै अस्याः दक्षिण ꣳ स्तनम्पिता स्वयम्प्रक्षाल्य कुमाराय इम ꣳ स्तन० मध्ये उत्सञ्जुषस्व० सदनमाविशस्व १ इति प्रयच्छति ततो वामं स्तनम्प्रक्षाल्य आदौ यस्ते स्तनः पश्चादिमꣳस्तनमित्येताभ्यामिति हरिहरकारिकाकारगङ्गाधराः जयरामस्तु इमꣳस्तनम् १ यस्ते स्तनः शशयो० धातवेकः २ इत्येताभ्याम्मन्त्राभ्याम्प्रयच्छति युक्तञ्चैतत्

इदङ्कालान्तरे न भवति ततः अत्र दद्यात्सुवर्णम्वा भूमिङ्गान्तुरगन्तथा ।
छत्रञ्छागम्वस्त्रमाल्यं शयनञ्चासनङ् गृहम् ॥ १ ॥ धान्यङ् गुडन्तिलान्सर्पि-
रन्यद्वाऽस्ति गृहे वसु । आयान्ति पितरो देवा जाते पुत्रे गृहम्प्रति ॥ २ ॥
तस्मात्पुण्यतमम्प्रोक्तम्भारते चादिपर्वणि ॥ तत अष्टाङ्गुलम्परित्यज्य
नालञ्छिन्द्यात्क्षुरादिना ॥ अथ सूतिकायाः शिरः प्रदेशे खट्वाऽधस्ताद्भूमौ
उदपात्रम् आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ एवमस्या ठँ सूतिकाया ठँ
सपुत्रिकायाञ्जाग्रथ इति निदधाति तत्पात्रन्दशाहन्तिष्ठति ततः प्रत्यहमा-
उत्थानादुत्थानपर्यन्तम् सन्ध्ययोरुभयोर्द्वौ द्वे नित्यहोमादनन्तरम् ओत्या-

नादन्वहङ्कार्यं सन्ध्ययोः स्थापनादिकम् इति कारिका द्वारदेशे परिसमू-
हनादिपञ्चभूसंस्कारान्कृत्वा सूतिकाग्निमुपसमाधाय फलीकरणैस्तण्डुल-
कणैर्मिश्रान्सर्षपान्तस्मिन्नग्नावावपति आवपनोपदेशान्नान्यत्रेति कर्तव्यता
यथा शण्डामर्का उपवीरः शौण्डिकेय उलूखलः । मलिम्लुचो द्रोणास-
श्च्यवनो नश्यतादितः स्वाहा इदमग्नये नमम आलिखन्न निमिषः
किम्वदन्त उपश्रुतिः हर्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्ष-
पारुणश्च्यवनो नश्यतादितः स्वाहा इदमग्नये नमम एवम्प्रत्यहन्दशाम-
दिनमभिव्याप्य सन्ध्याद्वये ऽग्निस्थापनाद्येतदन्तङ्कर्तव्यम् इदमपि का-

लान्तरे न भवत्येव नियतकालत्वात् तथा च वृद्धसम्मतिः अनुप्राणनवा
त्सप्राभिमर्शनानुमन्त्रणे कालान्तरेऽपि कुर्वीत आयुष्यकरणन्तथेति ।
ततः कृतैतज्जातकर्माङ्गतया विहितदशानाम्ब्राह्मणानाम्भोजनमाशौचान्ते
सम्प्रदास्ये इति सङ्कल्प्याशौचान्ते देयम् जन्मलग्ने ऽरिष्टकारकग्रहसत्वे
तद्दानमपि नालच्छेदनात्प्रागेव दत्त्वा नालच्छेदनङ्कार्यम् इदञ्जातकर्म
जन्माशौचेऽपि कार्यम् पितुरसन्निधाने ऽन्येन सन्निहितकुलवृद्धेन कार्यम्
अतीतकालञ्चेत् अश्विनीरोहिणीमृगपुनर्वसुपुष्योत्तरात्रयहस्तचित्रास्वात्य-
नुराधाश्रवणधनिष्ठाशततारारेवतीषु शुभे वारे तिथौ च कार्यम् यदि

कुमारग्रह उपद्रवेत्तदा पिता बालञ्जालेनोत्तरीयेण वा प्रच्छाद्याङ्क आधाय जपति कूर्कुर इत्यादित्रयाणाम् प्रजा० अनुष्टुप्० शुनको० जपे विनियोगः कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरोलपेतापह्वर ॥ १ ॥ तत्सत्यम् यत्ते देवावरमददुः स त्वं कुमार-मेव वा वृणीथाः। चेच्चेच्छु० पह्वर ॥ २ ॥ तत्सत्यम् यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ चेच्चेच्छु० ॥ ३ ॥ इति अथ कुमारन्न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसि इति अभिमृशति सर्वशरीरे अत्र साग्निकास्त्रियाऽपि सूतिकया लौकिकाग्निपक्ष-

मेव पर्वण्यपि भोक्तव्यम् सूतिसम्बन्धिपक्वादि कर्म तल्लौकिकेऽनले । पर्व-
ण्यपि च तत्पक्वमश्नीयान्नैव दोषभाक् इति जातकर्म ॥ अथ षष्ठे दिवसे
षष्ठ्यादिपूजादौ पित्रादेस्तात्कालिकी शुद्धिर्व्यासेनोक्ता ॥ सूतिका वास-
निलया जन्मदानामदेवताः । तासां यागनिमित्तन्तु शुद्धिर्जन्मनि कीर्ति-
ता ॥ प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वेतेषु न कुर्वीत सूतक-
म्पुत्रजन्मनि इति कारिकायान्तु महारक्षा विधातव्या पञ्चमे दशमेऽहनि ।
पूज्यस्तत्र गणाध्यक्षो गन्धाद्यैर्जातहारिणीत्युक्ता सूतिका वासनिलयेत्याद्यु-
क्तम् अतः पञ्चमे दिवसे गणाध्यक्षजातहारिणीजन्मदाख्यदेवतानाम्पू-

जननम् षष्ठे तु षष्ठीपूजनङ्कार्यम् तत्र पञ्चमे दिने पूर्वरात्रौ पित्रादिर्द्विरा-
चम्य त्रिः प्राणानायम्य देशकालौ सङ्कीर्त्य अस्य शिशोरायुरारोग्या-
भिवृद्धिसकलानिष्टनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थङ्गणाध्यक्षजातहारिणी-
जन्मदाख्यदेवतानां यथाशक्ति मिलितोपचारैः पूजनमहङ्करिष्ये इति
सङ्कल्प्य क्रमेण चन्दनादिना कुड्यलिखित प्रतिमासु पीठादावक्षतपुञ्जेषु
वा गणाध्यक्षं जातहारिणीम् जन्मदाञ्च ॥ ॐ गणाध्यक्षाय नमः । ॐ जातहा-
रिण्यै० ॐ जन्मदायै० इति नाममन्त्रेण पृथक् पृथक् षोडशोपचारैः सम्पू-
जयेत् ततो जननी जन्मसौख्यानां वर्द्धनी धनसम्पदाम् । साधनी सर्वसि-

द्धीनां जन्मदे त्वान्नता वयम् ॥ १ ॥ इति जन्मदान्नत्वा अन्नादिबलिश्च देयः । सूतिकागृहम् परितश्शास्त्रदीपमुसलोदकविभूतिसर्षपयुतं विधेयम् एकस्मिन्खड्गे राकाम् अनुमतीम् सिनीवालीम् कुहूम् इति चतस्रः कन्याः पञ्चमीं वातघ्नीञ्च सम्पूज्य बहिरागत्य द्वारस्योभयपार्श्वयोः द्वे द्वे मातृके विलिख्य क्रमेण ॐ धिषणायै नमः ॐ वृद्धिमात्रे नमः ॐ गौर्यै नमः ॐ पूतनायै नमः इति नाममन्त्रेण सम्पूज्य ॥ धिषणा वृद्धिमाता च तथा गौरी च पूतना । आयुर्दात्र्यो भवन्त्येता अद्य जन्मदिने मम । इति प्रार्थयेत् ॥ ब्राह्मणांश्च गन्धताम्बूलदक्षिणाभिः पूजयेत् शस्त्रहस्तैः पुरुषैर्मङ्ग-

लगीतगायद्भिः स्त्रीभिश्च जागरणङ्कर्तव्यम् अतः प्रभृति प्रत्यहमेता देवताः पूजनीयाः दशम्यां रात्रौ विसर्जयेत् षष्ठ्यां रात्रौ तु द्विराचम्य त्रिः प्राणाना-यम्य देशकालौ सङ्कीर्त्य ममास्य कुमारस्यायुरारोग्याभिवृद्धिसर्वानिष्ट-निवृत्तिद्वारा श्री परमेश्वरप्रीत्यर्थं षष्ठीदेव्याः पूजनमहङ्करिष्ये इति सङ्कल्प्य ॐ षष्ठीदेव्यै नमः इति नाममन्त्रेण सम्पूज्य पीठादावक्षतपुञ्जे वा। ततः प्रार्थना ॥ गौरीपुत्रो यथा स्कन्दः शिशुत्वे रक्षितः पुरा । तथा ममाप्ययम्बालः षष्ठिके रक्षतान्नमः ॥ षष्ठीदेवि नमस्तुभ्यं सूतिकागृहशा-लिनी । पूजिता परया भक्त्या दीर्घमायुः प्रयच्छ मे । एवम्प्रार्थयेत् ॥ इति

षष्ठीपूजनम् ॥ * ॥ अथ नामकरणम् ॥ तच्च दशरात्रे व्युष्टे नामकरणमिति गोभिलसूत्रात् ॥ अहन्येकादशे नामेति याज्ञवल्क्यस्मृतेः ॥ दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोतीति गृह्यसूत्रात् एकादशेऽन्हि ब्राह्मणेन कर्तव्यम् तत्र भद्रावैधृत्यमावास्यादि कालाशुद्धौ द्वादशेऽष्टादशे पूर्णे मासे शतरात्रे वर्षे वा कार्यम् तत्रादिस्तु स्वस्वाशौचान्ते कुर्यात् तत्र नियतकाले गुरुभृग्वोरस्ताद्यधिमासादिदोषो नास्ति अतीतकाले तु सो ऽस्त्येव अतीतकालश्चेत् अश्विनीरोहिणीमृगपुनर्वसुपुष्योत्तरात्रय हस्तत्र- यानुराधाश्रवणत्रयरेवतीषु शुभवारे रिक्ताऽष्टमीवर्जिततिथौ कार्यम् तत्र

पूर्वाह्णे पित्रादिः कृताह्निकः प्राणानायम्य देशकालसङ्कीर्त्तनान्ते अस्य कुमारस्य बैजिकगार्भिकैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वारा श्रीपरमेश्वरप्रीतये नामकरणमहङ्करिष्ये तदङ्गतया विहितं स्वस्तिवाचनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये इति सङ्कल्प्य तानि कृत्वा नामकरणपूर्वाङ्गत्वेन विहितम्ब्राह्मणत्रयाय भोजनं सम्प्रदास्ये इति सङ्कल्प्यानुच्छिष्टपाकेन त्रीनधिकान्ब्राह्मणान्भोजयित्वा ततः प्रशस्तपात्रे तण्डुलोपरि आदौ लक्ष्मीनृसिंहभक्त इत्यादि स्वकुलदेवतानाम लेख्यम् ततो मार्गशीर्षादेः कृष्णो ऽनन्तो

ऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः । उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ॥ योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥ इति क्रमादागत-स्मासनाम चक्रधर इत्यादि लेख्यम् ततो ऽवकहडचक्रानुसारेण जन्मन-क्षत्रपादप्रयुक्ताद्यक्षरज्जन्मनाम भैरव इत्यादि लेख्यम् ततः कादिपञ्चव-र्गाणाङ्घोषसञ्ज्ञकतृतीयचतुर्थपञ्चमाक्षरहकाराद्यमन्तस्थसञ्ज्ञकयवरलाद्यन्य-तममध्यमाक्षरन्दीर्घान्ताक्षरम्पितामहादिनाम कृत्प्रत्ययान्तन्द्व्यक्षरञ्चतुरक्ष-रम्वा शर्म ब्राह्मणस्य सुखवाचकशब्दान्तम् ब्राह्मणस्य यथा हरदत्त शर्म्मा हरि शर्म्मा इत्यादि क्षत्रियस्य तु वर्म्मा यथा हरदत्त वर्म्मा

हर वर्म्मा हरदत्तसिंह हरसिंह इत्यादि वैश्यस्य तु हरिगुप्त इत्यादि
शूद्रस्य तु हरिदास इत्यादि लेख्यम् नामदेवताभ्य इति सम्पूज्य ततो
मातुरुत्सङ्गस्थशिशोर्द्दक्षिणे कर्णे कुलनाम्ना लक्ष्मीनृसिंह भक्तोऽसीत्यादि
कथनीयम् मासनाम्ना चक्रधर इत्यादि नक्षत्रनाम्ना भैरवोऽसीत्यादि
व्यावहारिकनाम्ना हरदत्त शर्म्माऽसीत्यादिनामचतुष्टयं कथनीयम् विप्रै-
र्मनो जूतिरिति मन्त्रान्ते नाम सुप्रतिष्ठितमस्तु इति वक्तव्यम् तत
उत्थितो बद्धाञ्जलिः कर्ता कुलनाम्ना लक्ष्मीनृसिंहभक्तनामायम्भवतो
ऽभिवादयते इति वदेत् ते च आयुष्मान् भवतु लक्ष्मीनृसिंहभक्त इति

वदेयुः एवमेव कर्ता मासनाम्ना चक्रधरनामायम्भवतो ऽभिवादयते इति वदेत् ते च आयुष्मान् भवतु चक्रधरशर्म्मा इति वदेयुः ततः कर्ता नक्षत्रनाम्ना भैरवशर्म्माऽयम्भवतोऽभिवादयते इति वदेत् ते च आयुष्मान् भवतु भैरवशर्म्मा इति वदेयुः पुनः कर्ता व्यावहारिकनाम्ना हरदत्त शर्म्माऽयम्भवतोऽभिवादयते इति वदेत् ते च आयुष्मान् भवतु हरदत्त शर्म्मा इति वदेयुः इति यस्य यथागतन्नामचतुष्टयमभिवादनप्रत्यभिवादनेषूह्यम् । ततः कर्ता विप्रान्नत्वा कृतैतन्नामकरणाङ्गतया विहितन्दशसङ्ख्याकब्राह्मणेभ्यो भोजनं सम्प्रदास्ये इति सङ्कल्प्य ब्राह्मणान्दश भोज-

येत् विप्रान्सम्भोज्य ताम्बूलदक्षिणाभिस्तेभ्य आशिषो गृह्णीयात् कन्यायास्तु अयुजाक्षरमाकारान्तन्तद्धितप्रत्ययान्तङ्कार्यम् एवम्मासनामस्वपि कृष्णाऽनन्ताऽच्युता चक्रिणी वैकुण्ठा जनार्दना उपेन्द्री यज्ञपुरुषा वासुदेवा हरिणी योगेशी पुण्डरीकाक्षा इति ॥ इति संस्कारनृसिंहे नामकरणप्रयोगः ॥

॥ अथ पालकारोहः ॥ स च नामकरणदिने तदुक्तमुहूर्ते वा कुलदेवतां सम्पूज्यालङ्कृतं शिशुं हरिद्रादिचर्चिते पालके पतिपुत्रवत्यः स्त्रियो योगशायिनं स्मरन्त्यो गीतवाद्यैः प्राक् शिरसन्दक्षिणशिरसम्वा न्यसेत् अन्यदपि यथाचारङ्कार्यम् ॥ इति पालकारोहः ॥ अथ दुग्धपानम् ॥ तच्चै-

कत्रिंशे शुभे दिने तत्रासम्भवेऽन्नप्राशनोक्ते काले कुलदेवतां सम्पूज्य माताऽन्या वा सुभगा शङ्खमध्यस्थदुग्धं राहुरहितदिङ्मुखं शिशुम्पाययेत् ॥ इति दुग्धप्राशनम् । अथ निष्क्रमणम् ॥ तच्च जन्मतश्चतुर्थे मासि शुक्लपक्षे रिक्तापर्वषष्ठ्यष्टमीद्वादशीवर्जिततिथौ शुभवासरे अश्विनीमृगपुनर्वसुपुष्य-हस्तानुराधाऽभिजिच्छ्रवणधनिष्ठारेवतीषु कुम्भमीनवर्जितलग्ने शुभांशे पापग्रहवर्जिते केन्द्रत्रिकोणाष्टमद्वादशस्थानेषु शुभयुक्ते केन्द्रत्रिकोणे कार्यम् तत्र पत्नीकुमारसहितः कृतमङ्गलस्नान आचम्य प्राणायामत्रयदे-शकालकीर्तनान्ते अस्य कुमारस्य निष्क्रमणमहं करिष्ये तदङ्गतया विहितं

स्वस्तिवाचनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्च क-
रिष्ये तानि कृत्वा उक्तलग्ने वेदवाद्यघोषपुरस्सरम्भार्यया सह गृहाद्ब
हिरानीय तच्चक्षुरित्यस्य दध्यङ्ङाथर्वणऋषिः पुरउष्णिक्छन्दः सूर्यो देवता
सूर्यावेक्षणे विनियोगः तच्चक्षु० शतात् इति मन्त्रेण स्वयम्पठितेन सूर्यन्द-
र्शयेत् तत आगत्य चन्द्रार्कयोर्द्दिगीशानान्दिशाञ्च वरुणस्य च । निक्षेपा-
र्थमहन्दद्मि ते त्वां रक्षन्तु सर्वतः ॥ १ ॥ अप्रमत्तम्प्रमत्तम्वा दिवारात्रम-
थापि वा । रक्षन्तु सततं सर्वे देवा इन्द्रपुरोगमाः ॥ २ ॥ इति विभूतिं
तस्य सर्वाङ्गेषु लापयेत् अस्मिन्नेव दिने रात्रौ चन्द्रञ्चैव प्रदर्शयेत् ॥ ३ ॥

कृतैतन्निष्क्रमणाङ्गतया विहितन्दशब्राह्मणेभ्यो भोजनं सम्प्रदास्य इति सङ्क-ल्प्य तान्भोजयेत् ॥ इति सप्तर्ष्युपाख्यनरहरिभट्टविरचिते संस्कारनृसिंहे निष्क्रमणं समाप्तम् ॥ अथ प्रोष्यगृहागमन विधिः ॥ तत्र प्रसङ्गात्साग्निकस्य प्रवाससमये उपस्थानम् प्रवत्स्यन् यजमानः पञ्च भूसंस्कारान्कृत्वाऽऽहव-नीयदक्षिणाग्नी विहृत्य नर्यैत्यादित्रयाणां यजुषाम् आदित्यस्यार्षं क्रमेण गार्हपत्याहवनीयदक्षिणाग्नयो देवताः उपस्थाने विनियोगः गार्हपत्यम् नर्य्य प्रजाम्मेपाहि इत्युपतिष्ठते अथाऽऽहवनीयम् शꣳस्य पशून्मे पाहि इत्युप-तिष्ठते अथ दक्षिणाग्निम् अथर्य्य पितुम्मे पाहि इत्युपतिष्ठते सभ्याय

नमः इति सभ्यम् आवसथ्याय नमः इत्यावसथ्यञ्चोपतिष्ठते ततो वाग्य-
मेन गृहसीमान्तम् ग्रामसीमान्तम् वा गत्वा वाग्विसर्गः । यथाकालं यज-
मानेन त्यागोपस्थानजपादि कार्यम् प्रोष्येत्य ग्रामसीमाङ् गृहसीमाम्वा
ऽऽरभ्य समित्पाणिर्वाग्यमेन कञ्चिद्दुर्वादिकमप्यनुपेत्य गृहमागत्य स्नात्वा-
ऽऽचम्योपस्थानार्थम्पञ्च भूसंस्कारपूर्वकमग्निं विहृत्य आगन्मेत्यादित्रया-
णामादित्यस्यार्षम् आद्यन्तयोरनुष्टुप् मध्यमस्य न्यङ्कुसारिणी बृहती क्रमे-
णाहवनीयगार्हपत्यान्वाहार्यपचना देवताः उपस्थाने० आदौ आहवनी-
यम् आगन्मविश्ववेदस० आयच्छस्व इत्युपस्थायोपविश्य तूष्णीं समिध-

माधाय परिसमूहनन्तृणादेः प्रक्षेपः अथ गार्हपत्यम् अयमग्निर्गृहपति० आयच्छस्व इत्युपस्थायोपविश्य समिधमाधाय तृणादेः प्रक्षेपः अथ दक्षि-णाग्निम् अयमग्निः पुरीष्यो० आयच्छस्व इत्युपस्थायोपविश्य समिधमा-धाय तृणादेः प्रक्षेपः ततः सभ्याय नमः आवसथ्याय० इति तयोरुप-स्थानम् अथ वा गमने आगमने च तूष्णीमेवोपस्थानम् अथ गृहा-नेत्य पुत्रादीन् गृहामाबिभीतेत्यादितिसृणां शंयुर्बार्हस्पत्यऋर्षिः आद्या-स्त्रिष्टुप् विराड् रूपा द्वितीयाऽनुष्टुप् तृतीयामहापङ्क्तिस्त्र्यवसाना तिस्रोऽपि वास्तव्यः गृहामेत्यादि गृहेषु न इत्यन्तस्य गृहोपस्थाने क्षेमायव इत्यादेः

प्रवेशने च विनियोगः गृहामाबिभीत० मोदमानः १ येषामध्येति० जानतः २
उपहूता ऽइह गृहेषुनः इत्युपतिष्ठते अथ क्षेमायवः० शंय्योः शंय्याः ॥ ३ ॥
प्रविशति पुत्रन्दृष्ट्वा जपति अङ्गादङ्गादित्यस्य प्रजापति० अनुष्टुप्० आ-
युर्द्दै० जपे वि० अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्र-
नामासि सजीव शरदः शतमिति अथास्य मूर्द्धानं प्रजापतेष्ट्वेति द्वयोः
परमेष्ठी ऋषिः उष्णिक्० प्रजापतिर्दे० अवघ्राणे० प्रजापतेष्ट्वा हिङ्कारेणा-
वजिघ्रामि सहस्रायुषा हरदत्तशर्म्मन् जीव शरदः शतम् इत्यवजिघ्रति
मन्त्रेण सकृद्द्विस्तूष्णीम् ततो गवाँत्वाहिङ्कारेणावजिघ्रामि सहस्रायुषा

हरदत्तशर्म्मन् जीव शरदः शतम् इति मन्त्रेण सकृद् द्विस्तूष्णीम् मूर्द्धान-
मवजिघ्रति अथास्य दक्षिणे कर्णे जपति अस्मे प्रयन्धीन्द्रश्रेष्ठानीत्यनयोः
प्रजा० त्रिष्टुप्० इन्द्रो० दक्षिणसव्यकर्णयोर्जपे० अस्मेप्रयन्धि मघवन्नृजीषिन्नि-
न्द्ररायो विश्ववारस्य भूरेः अस्मे शतꣳ शरदो जीवसे धाऽ अस्मेवीराञ्छश्व-
तइन्द्रशिप्रिन् ॥ अथ सव्यकर्णे जपति इन्द्रश्रेष्ठानि द्रविणानि धेहि चित्ति-
न्दक्षस्य सुभगत्वमस्मे पोषꣳ रयीणामरिष्टिन्तनूनाꣳ स्वात्मानं वाचः
सुदिनत्वमह्नाम् इति स्त्र्यपत्यस्य तु मूर्द्धानमेवावजिघ्रति तूष्णीम् ॥ इति
सप्तर्ष्युपाख्यनरहरिभट्टविरचिते संस्कारनृसिंहे प्रोष्येत्यकृत्यम् ॥ अथो-

पवेशनम् ॥ तत्पञ्चमे मासि शुभवारे अश्विनीरोहिणीमृगपुष्योत्तरात्रय ज्येष्ठानक्षत्रेषु कार्यम् तत्र भार्याशिशुसहितः कृतमङ्गलस्नान आचमनप्राणायामत्रयान्ते अस्य कुमारस्योपवेशनमहङ्करिष्ये तदङ्गतया विहितङ्गणेशपूजनपूर्वकं स्वस्तिवाचनम्वराहपृथिवीपूजनञ्चाहङ्करिष्ये तत्कृत्वा वराहाय नमः पृथिव्यै नमः इति नाममन्त्रेण सम्पूज्य भूभागमुपलिप्य मङ्गलगीतवाद्यैरलङ्कृतशिशुमुपवेशयेत् तत्र मन्त्राः रक्षैनं वसुधे देवि सर्वदा सर्वगं शुभे । आयुः प्रमाणन्निखिलन्निक्षिपस्व हरिप्रिये ॥ १ ॥ अचिरादायुषस्त्वस्य ये केचित्परिपन्थिनः । जीवितारोग्यवित्तेषु निर्दहस्वाचि-

रेण तान् ॥ २ ॥ धारिण्यशेषभूतानां मातस्त्वमधिकाह्यसि । कुमारम्पाहि मातस्त्वं ब्रह्मा तदनुमन्यतामिति ॥ ३ ॥ ततस्तन्नीराज्य ब्राह्मणान् सम्पूज्य तैर्दत्ताशिषो गृह्णीयात् ॥ इत्युपवेशनम् ॥ अथान्नप्राशनम् ॥ तच्च जन्मतः षष्ठेऽष्टमे वा मासि पुत्रस्य पुत्र्यास्तु पञ्चमे सप्तमे वा प्रतिपत्षष्ठ्यष्टमीरिक्ताद्वादशीवर्जिततिथौ बुधगुरुभृगुवारे अश्विनीरोहिणीमृगपुनर्वसुपुष्योत्तरात्रयहस्तत्रयानुराधाश्रवणत्रयरेवतीनक्षत्रे ग्रहमात्रवर्जिताष्टमद्वादशस्थाने पापग्रहवर्जितशुभग्रहयुक्तकेन्द्रत्रिकोणे मेषवृश्चिकमीनवर्जितलग्ने कार्यम् उक्तकाले गुर्वस्तादिदोषो नास्ति भार्याशिशुसहितः कृतमङ्ग-

लस्नान आचमनप्राणायामत्रयदेशकालसङ्कीर्तनान्ते ममास्य कुमारस्या-
न्नप्राशनसंस्कारङ्कर्तुन्तदङ्गतया विहितं स्वस्तिवाचनपूर्वकम्मातृकापूजनं
वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्य इति सङ्कल्प्य कृत्वा
च स्थण्डिले पञ्च भूसंस्कारान्कृत्वा लौकिकाग्नेः स्थापनम् पुनराचमनप्रा-
णायामदेशकालकीर्तनान्ते ममास्य कुमारस्य मातृगर्भमलप्राशनशुद्धिवै-
जिकगार्भिकैनोनिवर्हणब्रह्मवर्चसादिसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमन्नप्रा-
शनमहङ्करिष्ये इति सङ्कल्पः तत्र पूर्वे० अपरेण० द्वे पवित्रे ताम्रमय्याज्य०
ताम्रमयी चरु० पालाश्यः स० प्राङ्गा० समिद्धु० पूर्ण० दक्षिणा हन्तेति प्रा-

शनम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये अथर्ष्यादि देवीस्वाचमित्यस्य भा-
र्गव० त्रिष्टुप्० देवीवाग्देवता आज्यहोमे वि० वाजो नो अद्येत्यस्य देवा
ऋषयः त्रिष्टुप्० अन्नन्दैवतम् आज्यहोमे वि० भूर्भुवः स्वरिति महाव्याहृती-
नाम्पूर्ववत् ॥ अथ देवताऽभिध्यानम् ॥ अत्र प्रजापतिम् इन्द्रम् अग्निम् सो-
मम् देवीं वाचम् देवीं वाचम् वाजम् एता आज्येन प्राणम् अपानम् चक्षुः श्रो-
त्रम् एताश्चरुणा शेषेणाग्निं स्विष्टकृतम् अग्निम् वायुम् सूर्यम् अग्नीवरुणौ २
अग्निम् वरुणम् सवितारम् विष्णुम् विश्वान्देवान्मरुतः स्वर्कान् वरुणम्
प्रजापतिम् एताः पुनराज्येनैता देवता अङ्गप्रधानार्थां अस्मिन्कर्मण्यहं

यक्ष्ये ततो ब्रह्मोपवेशनादि पूर्णपात्रासादनान्ते मधुरादिसर्वान् रसान् सर्वमन्नं मधु घृतं सुवर्णञ्च शास्त्राणि शस्त्राणि लेखनीम् वस्त्रम् रजतम् सुवर्णम् भाण्डानि चोपकल्पनीयानि ततः पवित्रकरणाद्याज्यभागान्ते आज्येनानन्वारब्धः देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वद-न्ति । सानोमन्द्रेषमूर्जन्दुहाना धेनुर्वागस्मानुपसुष्टु तैतु स्वाहा इदं देव्यै वाचे न मम पुनः देवीञ्च० सुष्टुतैतु स्वाहा वाजोनोऽअद्य० येयछं स्वाहा इदन्देव्यै वाचे वाजाय च न मम ततश्चरुमभिघार्य स्रुवेणैव ॐ प्राणेनान्न-मशीय स्वाहा इदम्प्राणाय न मम ॐ अपानेन गन्धानशीय स्वाहा इद-

मपानाय न मम ॐ चक्षुषा रूपाण्यशीय स्वाहा इदं चक्षुषे न मम ॐ श्रोत्रेण यशोऽशीय स्वाहा इदं श्रोत्राय न मम चरोरुत्तरार्द्धादग्नेरुत्तरार्द्धे ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ततोऽन्वारब्धः भूरादिप्राजापत्यन्ता नवाऽऽहुतयः ततः संस्रवप्राशनादिप्रणीताविमोकान्तङ् कृत्वा स्वर्णादिपात्रे सर्वान् रसान् सर्वमन्नम्मध्वाज्यञ्चैकीकृत्य हस्तगृहीत-सुवर्णेन देवताग्रे मातुरुत्सङ्गस्थशिशुं हन्त इति मन्त्रेण प्राशयेत् कुमार्या-स्तूष्णीमेव तत उपकल्पितवस्तुमध्ये शिशुमुपवेश्य तन्मध्ये यदेवादौ गृह्णाति तेन तस्य जीविका परीक्षणीया ॥ इत्यन्नप्राशनम् ॥ अथ चूडाकर-

णाम् ॥ तत्र प्रथमे द्वितीये तृतीये पञ्चमे वा वर्षे उपनीत्या सह वा गुरु-
भृग्वोरनस्तङ्गतयोश्चैत्रवर्जितमाघादिपञ्चमासे शुक्ले पर्वरिक्ता षष्ठीप्रतिपद्व-
र्जिततिथौ सोमबुधगुरुभृगुवारे अश्विनीपुनर्वसुपुष्यहस्तचित्रास्वातीज्येष्ठा
श्रवणधनिष्ठाशततारकारेवतीनक्षत्रे भृगुपापरहितसप्तमस्थाने ग्रहमात्र-
वर्जिताष्टमस्थाने चन्द्रपापविनिर्मुक्ते लग्ने शुभांशे सन्ध्यारहितपूर्वाह्णे मध्य-
न्दिने वा माता कुमारमादायाऽऽप्लाव्याहते वाससी परिधाप्य बहिःशाला-
यामङ्क आधाय पत्युर्दक्षिणतः पश्चादग्नेरुपविशति पिता आचम्य प्रा-
णानायम्य ॐ श्रीमन्महागणाधिपतये नमः ॐ श्रीलक्ष्मीनारायणाभ्या-

न्नमः ॐ श्रीउमामहेश्वराभ्यान्नमः शचीपुरन्दराभ्यान्नमः मातापितृभ्यान्नमः इष्टदेवताभ्यो नमः कुलदेवताभ्यो नमः सर्वेभ्यो देवेभ्यो नमः सर्वेभ्यो ब्राह्मणेभ्यो नमः सुमुखश्चेत्यादि देशकालकीर्तनान्ते अस्य कुमारस्य श्वः अद्य वा चूडाकरणङ्कर्तुन्तदङ्गम्पुण्याहवाचनमविघ्नपूजनम्मण्डपदेवतापूजनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थङ्गणपतिदुर्गापूजनमहङ्करिष्ये इति सङ्कल्प्य तानि कृत्वा अनुच्छिष्टपाकेन त्रीन् ब्राह्मणान् चूडाकरणपूर्वाङ्गतया विहितत्वेनाहम्भोजयिष्ये इति सङ्कल्प्य तान् भोजयित्वा परिसमूहनाद्यग्निस्थापनम् पुनर्देशकालकी-

र्तनान्ते अस्य कुमारस्य बीजगर्भसमुद्भवैनोनिवर्हणेन बलायुर्वर्चोऽभिवृद्धि-
द्वारा श्रीपरमेश्वरप्रीतये चौलाख्यङ्कर्म करिष्ये इति सङ्कल्पः तत्र पूर्वेण ब्रह्मणो
गमनम् अपरेण पात्राऽऽसादनम् द्वे पवित्रे ताम्रमय्याज्यस्थाली पालाश्यः
समिधः प्राज्ञावाघारौ समिद्धतमे आज्यभागौ पूर्णपात्रम् दक्षिणा घृतपिण्डः
सकेशगोमयपिण्डस्योदकान्ते निधानम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये
इति वैकल्पिकान् स्मृत्वा ॐ भूर्भुवः स्वरिति महाव्याहृतीनाम्प्रजापति
ऋषिः क्रमेण गायत्र्युष्णिगनुष्टुप्छन्दाँसि अग्निवायुसूर्या देवता त्वन्नोअग्ने
सत्वन्नोअग्ने अयाश्चाग्ने येते शतमिति मन्त्राणाम्वामदेवऋषिः त्रिष्टुप्

छन्दः अग्नीवरुणौ देवते प्रथमयोः तृतीयस्याग्निर्दैवता चतुर्थस्य वरुण-
स्सविता विष्णुर्विश्वेदेवामरुतः स्वर्कादेवताः उदुत्तममिति शुनःशेपऋषिः
त्रिष्टुप्छन्दः वरुणो देवता सर्वेषां चूडाकरणाङ्गहोमे विनियोगः उष्णेन
वाय इत्यस्य परमेष्ठिऋषिः प्रतिष्ठाछन्दः अदितिर्दैवता नीरासेके विनियोगः
सवित्रेत्यस्य प्रजापतिऋषिः गायत्रीछन्दः आपोदेवता क्लेदने विनियोगः
ओषधइत्यस्य प्रजापतिऋषिः यजुश्छन्दः तरुणान्दैवतम् अन्तर्द्धाने विनि-
योगः शिवोनामेत्यस्य प्रजापतिऋषिः यजुश्छन्दः क्षुरो देवता क्षुरग्रहणे
विनियोगः निवर्तयामीत्यस्य प्रजापतिऋषिः यजुश्छन्दः लिङ्गोक्ता देवता

क्षुरगोदानसंलग्नीकरणे विनियोगः येनावपदित्यस्य आलम्बायनऋषिः पङ्क्तिश्छन्दः सवितादेवता सकेशतरुणाच्छेदने विनियोगः त्र्यायुषमित्यस्य नारायणऋषिः उष्णिक्छन्दः अग्निर्देवता सकेशतरुणाच्छेदने विनियोगः येन भूरिश्चरेत्यस्य वामदेवऋषिः यजुश्छन्दः क्षुरोदेवता छेदने विनियोगः यत्क्षुरेत्यस्य वामदेवऋषिः यजुश्छन्दः क्षुरोदेवता शिरःप्रदक्षिणे विनियोगः अक्षतण्वन्नित्यस्य वामदेवऋषिः यजुश्छन्दः क्षुरोदेवता क्षुरदाने विनियोगः इत्यार्षादि स्मृत्वा अत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम्

सवितारम् विष्णुम् विश्वान्देवान्मरुतः स्वर्कान् वरुणम् प्रजापतिम् अग्निम् स्विष्टकृतम् एता देवता आज्येनास्मिन् चूडाकर्मण्यहं यक्ष्ये पूर्ववद्ब्रह्मव-रणादि चरुं विना पात्रासादनम् तत्राज्यपूर्णपात्रानन्तरम् उपकल्पनीयानि शीतोदकम् उष्णोदकम् घृतपिण्डः श्रेणीशलली सप्तविंशतिकुशतरुणानि ताम्रपरिष्कृतआयसः क्षुरः आनडुहगोमयपिण्डः नापितः वरश्च एतान्यु-पकल्प्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्येतिवचनात्प्रोक्ष्य आज्य-निर्वापादिपवित्रप्रतिपत्त्यन्तम्प्राकृतवत् तदन्ते ब्रह्मन् चूडाकरणाङ्गतया विहितमिदम्पूर्णपात्रम्प्रतिगृह्यताम् प्रतिगृह्णामीति ब्रह्मा द्यौस्त्वा ददातु

पृथिवी त्वा प्रतिगृह्णातु इति जपति च प्रणीताविमोकः तत उष्णोदकमा-
दाय उष्णेन वा य उदकेनेह्यदिते केशान्वप इति मन्त्रेण शीतास्वप्सूष्णा आप
आसिञ्चति अथात्र घृतपिण्डम्प्रास्यति तूष्णीम् तत उदकमादाय सवित्रा
प्रसूतादैव्या आप उदन्तु ते तनून्दीर्घायुत्वाय वर्चसे इति दक्षिणङ्गोदान-
मुन्दति तूष्णीम् त्रेण्याशलल्या विनीय त्रीणि कुशतरुणानि ओषधे त्रा-
यस्व इति अन्तर्दधाति तानि वामेन धारयति शिरोग्राण्यूर्ध्वमूलानि
ओषधे त्रायस्वेत्येतावदेव मन्त्रः ततो लोहक्षुरं शिवो नामासि स्वधितिस्ते
पिता नमस्ते अस्तु मामाहिंसीः इत्यादाय निवर्तयाम्यायुषेन्नाद्याय प्रज-

ननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय इति दक्षिणगोदाने संलग्नी-
करोति ततो येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् तेन
ब्रह्माणोवपतेदमस्यायुष्यं जरदष्टिर्यथासत् इति सकेशानि प्रच्छिद्यानडुहे
गोमयपिण्डे प्रास्यत्युत्तरतो ध्रियमाणे एवमेवोन्दनविनयनकुशतरुणत्रया-
न्तर्धानक्षुरसंलग्नीकरणछेदनगोमयपिण्डनिधानानि द्विरपरन्तूष्णीङ्कर्तव्यम्
अथ पश्चाद्गोदानम् सवित्रेत्युन्दनम् तूष्णीम् त्रेण्याशलल्या विनीय ओ-
षधे इति कुशतरुणत्रयान्तर्धानम् तूष्णीं क्षुरादानम् मन्त्रेण गृहीतत्वात्
एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनमिति श्रौतसूत्रात् निवर्तयामीति गोदान

क्षुरसंलग्नीकरणम् ततः त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नो अस्तु त्र्यायुषम् ॥ इति प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्यति अत्राप्येवमेव द्विरपरन्तूष्णीम् अथोत्तरतः गोदानम् सवित्रेत्युन्दनम् तूष्णीन्त्रेण्याशलल्या विनीय ओषधेति कुशतरुणत्रयान्तर्द्धानम् तूष्णीम् क्षुरादानम् निवर्तयामीति गोदानसंलग्नीकरणम् ततो येन भूरिश्चरादिवं ज्योक्चपश्चाद्धिसूर्यम् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये इति सकेशानि प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्यति अत्राप्येवमेव द्विरपरन्तूष्णीम् ततो यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वा वप-

ति केशाञ्छिन्धि शिरोमास्यायुः प्रमोषीः इति मन्त्रेण क्षुरेण शिरः प्रदक्षि-
णम्परिहरति सकृन्मन्त्रेण द्विस्तूष्णीम् ततस्ताभिरद्भिः शिरः समुद्य अक्षरव-
म्परिवप इति मन्त्रेण नापिताय क्षुरम्प्रयच्छति सच प्राङ्मुखस्योदङ्मु-
खस्य वा यथामङ्गलङ्केशशेषङ्करोति तथा च कारिका वशिष्ठा दक्षिणे भागे
उभयत्रात्रिकश्यपौ । शिखाङ्कुर्वन्त्याङ्गिरसः शिखाभिः पञ्चभिर्युतम् ॥ १ ॥
परितः केशपङ्क्त्या वा मुण्डाश्च भृगवोमताः । कुर्वन्त्यन्ये शिखामात्रं मङ्ग-
लार्थमिह क्वचित् ॥ २ ॥ ततो वस्त्रादिना अनुगुप्तमेतं सकेशङ्गोमयपिण्ड-
मुदकान्ते निधाय उपकल्पितवरमाचार्याय दद्यात् आचार्यचूडाकरणाङ्ग-

तया विहितोऽयं वरः प्रतिगृह्यतामिति अत एवास्मिन्कर्मणि वरदानार्थ-
ङ्कर्तुरन्य आचार्योऽप्यपेक्षितः स्त्रीणामपि जातकर्मादिचूडाकरणान्तास्तू-
ष्णीं संस्काराः कार्याः होमस्तु समन्त्रः जातकर्मादिकाः स्त्रीणां चूडाकर्मा-
न्तिकाः क्रियाः । तूष्णीं होमः समन्त्रः स्यादिति गोभिलभाषितमिति रेणुः
ब्राह्मणेभ्यो भूयसीन्दक्षिणाङ्कृतकर्मसाद्गुण्यार्थं सम्प्रददे इति सङ्कल्प्य दत्वा
आशिषो गृहीत्वा कृतस्य चूडाकरणकर्मणोऽङ्गतया विहितान् दश ब्राह्म-
णान् भोजयिष्ये इति सङ्कल्प्य भोजयेत् यस्य स्मृत्येति विष्णुन्नत्वा कर्मस-
म्पूर्णतां वाचयित्वा मातॄः विसर्जयेत् मण्डपदेवताश्च ॥ इति चूडाकरणम् ॥

अथ कर्णवेधः ॥ स च तृतीये पञ्चमे वर्षे गुरुभृग्वोरनस्तङ्गते चैत्रकार्तिक-
पौषफाल्गुनमासे पर्वरिक्तैकादश्यष्टमीव्यतिरिक्ततिथौ सोमबुधगुरुवारे
दिवैव अश्विनीमृगपुनर्वसुपुष्योत्तराफाल्गुनीहस्तचित्रानुराधोत्तराषाढाश्रव-
णधनिष्ठोत्तराभाद्रपदारेवतीनक्षत्रेषु शुभग्रहलग्नांशे कुमारं संस्नाप्य आ-
चम्य प्राणानायम्य देशकालकीर्तनान्ते अस्य कुमारस्याभरणधारणसिद्धि-
द्वारा परमेश्वरप्रीतये कर्णवेधमहङ्करिष्ये तदङ्गत्वेन गणेशपूजनम्पुण्याह-
वाचनं विष्णुशिवब्रह्मचन्द्रसूर्यदिगीशानासत्यसरस्वतीकुलदेवतागोब्राह्मण-
पूजनमहङ्करिष्ये इति सङ्कल्प्य तत्कृत्वा सम्पूज्य प्राङ्मुखङ्कुमारमुपवेश्य

भद्रङ्कर्णेभिरित्यस्य प्रजापतिऋषिः त्रिष्टुप्छन्दः लिं० दे० कर्णाभिमन्त्रणे विनियोगः भद्रङ्कर्णेभिरिति मन्त्रेण दक्षिणकर्णमभिमन्त्रयते वक्ष्यन्तीवेदेति मं० प्र० ऋ० त्रि० लिं० कर्णाभिमन्त्रणे विनियोगः वक्ष्यन्ती वे० द० पारयन्ती इति सव्यमभिमन्त्रयते कुमारस्य मधुरन्दत्वाऽथ भिन्द्यात् कुमारस्य दक्षिणमादौ कुमार्याः वामम् ततः कर्णवेधाङ्गतयैकं ब्राह्मणम्भोजयिष्ये इति सङ्कल्प्य भोजयेत् ॥ इति कर्णवेधः ॥ अथाक्षरारम्भः ॥ स च पञ्चमे वर्षे गुरुभृग्वोरस्तरहिते कुम्भार्कवर्जितोत्तरायणे अनध्यायरिक्ता षष्ठीवर्जिततिथौ भौमशनिहीनवारे भरणीत्रयोत्तरात्रयविशाखाज्येष्ठामघावर्ज्यनक्षत्रे पापग्रहर-

हितलग्नपञ्चमस्थाने ग्रहमात्रवर्जिताष्टमस्थाने शुभांशे ॥ अथ पिताऽऽ-
चम्य प्राणानायम्य देशकालकीर्तनान्ते अस्य कुमारस्य वाङ्मुखाय ग्रहण
धारणद्वारा परमेश्वरप्रीत्यर्थमक्षरविद्यारम्भमहङ्करिष्ये तदङ्गत्वेन गणेश-
पूजनम्पुण्याहवाचनविद्यादिपूजनमहङ्करिष्ये इति सङ्कल्प्य तत्कृत्वा ॐ
हरये नमः लक्ष्म्यै नमः सरस्वत्यै नमः विद्यायै नमः इति सम्पूज्य ब्राह्म-
णांश्च सम्पूज्य तैर्दत्ताशिषङ् कुमारं शिक्षयेत् ॥ इत्यक्षरस्वीकारः ॥ अथा-
तिक्रान्तसंस्कारविधिः ॥ संस्कारा अतिपद्येरन् स्वकालाच्चेत्कथञ्चन । हुत्वा-
ऽनादिष्टकङ् कुर्याद् ये तूपनयनादधः ॥ तथा भगवांश्च आरभ्याधानमाचौ-

लात्कालेऽतीते तु कर्मणाम् । व्याहृत्याज्यं तु संस्कृत्य हुत्वा कर्म यथावि-
धि ॥ कार्यमिति शेषः ॥ स एवात्र प्रायश्चित्तमाह एतेष्वेकैकलोपेऽपि पाद-
कृच्छ्रं समाचरेत् । चौलादर्वाक् प्रकुर्वीत प्रायश्चित्तादनन्तरमिति ॥ अत्र
चौलादर्वागेतेष्वेकैकलोपे पादकृच्छ्रं समाचरेदित्यन्वयः चौलेत्वर्द्धकृच्छ्रम्
इदमबुद्धिपूर्वकरणे बुद्धिपूर्वन्तु सर्वत्र कृच्छ्रम् तत्राप्यतिक्रान्तङ्गर्भाधाना-
दितत्प्रसवपर्यन्तङ्कार्यम् जातकर्माद्युपनयनात्प्राक्कार्यम् पूर्वपूर्वसंस्कारस्यो-
त्तरोत्तरसंस्कारात्प्राक् गौणकालः तत्र प्रायश्चित्तङ् कृताकृतम् प्रायश्चित्तम-
कृत्वा वा गौणकाले समाचरेदिति वचनात् एवमत्रातीतसंस्कारविषये

उपनयनात्पूर्वं स बटुः कृतमङ्गलस्नानो धौतवस्त्रपरिधानः आचम्य प्राणा-
यामत्रयङ् कृत्वा देशकालकीर्तनान्ते अस्य कुमारस्य गर्भाधानादि चौला-
न्तानां संस्काराणां कालातिपत्तिदोषपरिहारेणाधिकारसिद्धिद्वारा परमेश्व-
रप्रीतये प्रायश्चित्तम्प्रतिसंस्कारम्पादकृच्छ्रम् चौले अर्द्धकृच्छ्रम् अमुकप्रत्या-
म्नायेनाहमाचरिष्ये इति सङ्कल्प्य यथासङ्कल्पम्प्रत्याम्नायेन कर्तव्यम् कृच्छ्र-
प्रत्याम्नायस्तु गोदानन्तन्मूल्यन्द्वादशब्राह्मणभोजनमथ वा दशसहस्रगाय-
त्रीजपायुतगायत्री तिलहोमान्यतमः एवम्प्रायश्चित्तङ् कृत्वा पुनर्देशकाल-
कीर्तनान्ते अस्य कुमारस्य गर्भाधानादिचौलान्तसंस्काराणाङ्कालातिपत्ति-

दोषपरिहारेणाधिकारसिद्धिद्वारा परमेश्वरप्रीतये प्रायश्चित्तहोममहङ्करिष्ये इति सङ्कल्प्य निरूप्याज्यमधिश्रित्य स्रुवं सम्मृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वा तिष्ठन्समिधमाधाय भूः स्वाहा इदमग्नये नमम भुवः स्वाहा इदं वायवे न मम स्वः स्वाहा इदं सूर्याय नमम भूर्भुवः स्वः स्वाहा इदम्प्रजापतये नमम त्वन्नो अग्ने वरु० स त्वन्नो अग्ने० अयाश्चाग्ने० ये ते शतम्० उदुत्तमम्० भवतन्न० इति हुत्वा पूर्ववत्त्यागः ॥ इत्यनादिष्टहोमङ्कृत्वा यथोक्तक्रमेणैव संस्काराः कार्याः केचित्प्रस्तुतकर्मार्थं संस्कृताज्येन पर्युक्षणान्ते अनादिष्टं हुत्वा प्रस्तुतङ्कर्म कुर्वन्ति तदयुक्तम् अत्र मातृकापूजन-

न्नान्दीश्राद्धञ्चैकमेव न पृथक् पृथक् ॥ गणशः क्रियमाणानाम्मातृणाम्पूजनं सकृत् । सकृदेव भवेच्छ्राद्धं होममन्त्राः पृथक् पृथक् । इति वचनात् ॥ इत्यतिक्रान्तसंस्कारविधिः ॥ अथोपनयनम् तच्च गर्भपञ्चममारभ्य नवमपर्यन्तङ्कार्यम् तथाचोक्तम् ॥ मनुः । ब्रह्मवर्चसकामस्य कार्यस्विप्रस्य पञ्चमे ॥ विष्णुः । षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे । अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः । सङ्ग्रहेऽपि । सप्तमे वाऽष्टमे वर्षे नवमे दशमे तथा । एकादशे द्वादशे वा ह्युपनेया द्विजातयः ॥ अत्रैकादशे क्षत्रियस्य द्वादशे वैश्यस्येति विवेकः अत एवाष्टवर्षम्ब्राह्मणमुपनयेद्गर्भाष्टमे वैकादशवर्षं

राजन्यन्द्वादशवर्षे वैश्यमिति कातीयम् अष्टवर्षाणि अतीतानि यस्येति व्याख्यातवान् अथर्वणसूत्रे गर्भपञ्चमेऽब्दे ब्राह्मणमुपनयेद्गर्भाष्टमे वा गर्भाष्टमे राजन्यङ्गर्भद्वादशे वैश्यमिति हरिहरवराहसूत्रे गर्भाष्टमेषु ब्राह्मणमुपनयेत् षष्ठेऽष्टमे पञ्चमे वा ॥ अत्रगर्भाष्टमेष्विति बहुवचनङ्गर्भषष्ठगर्भसप्तमप्राप्त्यर्थम् एवं क्षत्रियवैश्ययोरपि राज्ञो बलार्थिनः षडिति वाक्यवशात् षष्ठादिवर्षे कार्यम् तच्च चतुर्थाष्टमद्वादशस्थे गुरौ न कार्यम् प्रथमतृतीयषष्ठदशमराशिस्थं गुरुं सम्पूज्य कार्यम् ज्येष्ठापत्यस्य ज्येष्ठजन्ममासौ विना माघादिपञ्चमासेषु पर्वरिक्ता प्रतिपत्सप्तमीत्रयोदशीरहितासु तिथिषु

भौमशनिरहितवारेषु भरणीकृत्तिकाविशाखामघाज्येष्ठाशततारकावर्जितनक्षत्रेषु व्यतीपातवैधृतिपरिघपूर्वार्द्धविष्टिसङ्क्रान्तिसन्ध्यागर्जादिरहिते शुभकाले चन्द्रपापरहिते लग्ने पापरहितपञ्चमस्थाने चन्द्रशुक्रलग्ने अंशरहितषष्ठस्थाने ग्रहमात्रवर्जिताष्टमस्थाने स्वोच्चस्थशुभाक्रान्तलग्ने पापरहितशुभांशे त्रिधा विभक्तदिवसद्वितीयांशे पूर्वाह्णे वा कार्यम् ॥ अथ प्रयोगः ॥ तत्रोपनयनमुहूर्तात्पूर्वदिने सुस्नातः सुप्रक्षालितपाणिपादः परिहितधौताम्बरो बटुना सह शुचौ देशे उपविश्याचम्य प्राणायामत्रयङ्कृत्वा देशकालकीर्तनान्ते ममास्य कुमारस्योपनयनकर्तृत्वाधिकारसिद्धिद्वारा परमेश्वर-

प्रीतये कृच्छ्रत्रयम्प्रायश्चित्तममुकप्रत्याम्नायेनाहमाचरिष्ये इति सङ्कल्पङ् कृ-
त्वा यथोक्तप्रत्याम्नायेन कार्यम् एवम्बटुरपि आचम्य प्राणायामत्रयङ् कृत्वा
देशकालकीर्तनान्ते ममोपनयनत्वाधिकारसिद्धिद्वारा परमेश्वरप्रीतये
कृच्छ्रत्रयङ्करिष्ये इति सङ्कल्पङ् कृत्वा यथोक्तप्रत्याम्नायेन कार्यम् आचा-
र्यस्तु प्राणायामदेशकालकीर्तनान्ते गायत्र्युपदेशाधिकारार्थमयुतगायत्री-
जपमहङ्करिष्ये इति सङ्कल्प्यायुतजपङ् कुर्यात् ततः श्रीलक्ष्मीनारायणाभ्या-
न्नम इत्यादि पुनर्देशकालकीर्तनान्ते अस्य कुमारस्य श्व उपनयनङ्कर्तुन्तद-
ङ्गतया विहितं स्वस्तिवाचनपूर्वकमविघ्नपूजनम्मण्डपदेवतापूजनम्मातृका-

पूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये ॥ उपनयने बटोर्वैदिका ॥ प्राक् पश्चिमार्द्धम्पदषट्कयुक्तमुदीच्ययाम्यानि पदानि पञ्च । सवङ्कुरो ज्योतिषरत्नवेदिका बटोः शतायुर्मुनयो वदन्ति ॥ पूर्वमकृतचूडस्य तु अस्य कुमारस्य चूडोपनयने कर्तुन्तदङ्गतया विहितेत्यादि सङ्कल्प्य तत्कार्यम् उपनयनदिने कृतनित्यक्रियः कृतमङ्गलस्नानः कुमारपत्नीसहितो मण्डप उपविश्य देशकालौ सङ्कीर्त्य अस्य कुमारस्योपनयनङ्कर्तुन्तत्पूर्वाङ्ग-भूतं वपनङ्करिष्ये इति सङ्कल्प्य तत्कारयेत् पुनः सुस्नातबटुमुपवेश्य देश-कालौ सङ्कीर्त्यास्य कुमारस्योपनयनङ्कर्तुन्तत्पूर्वाङ्गतया विहितं ब्राह्मणत्रय-

म्भोजयिष्ये इति सङ्कल्प्य नवकृतान्नेन सद्यस्तान्भोजयेत् तत्पङ्क्तौ मुण्डित-
शिरसं बटुम्भोजयेत् ततो बहिः शालायाम्पञ्चभूसंस्कारपूर्वकं लौकिकाग्नि-
स्थापनम् आचम्य प्राणायामत्रयङ् कृत्वा देशकालकीर्तनान्ते अस्य कुमा-
रस्य ब्राह्मण्याभिव्यक्तिद्विजत्वसिद्ध्यर्थं वेदाध्ययनाधिकारार्थञ्चोपनयनमह-
ङ्करिष्ये इति सङ्कल्पः अमुकवर्षे उपनयनम् । इयन्दुरुक्तमिति मेखला-
बन्धः पालाशो दण्डः केशसम्मितः ऊर्द्ध्वदण्डस्य ग्रहणम् पूर्वेण ब्रह्मणो
गमनम् अपरेण पात्रासादनम् द्वे पवित्रे ताम्रमय्याज्यस्थाली पालाश्यः
समिधः प्राञ्चावाघारौ समिद्धतमे आज्यभागौ पूर्णपात्रन्ददिणा अग्नेस्त्त-

रत आसीनाय गायत्रीप्रदानम् अग्नये समिधमिति समिदाधानम् प्रथमा भिक्षा मातुः अन्या अपरिमिता अमौनम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये येनेन्द्रायेतिमन्त्रस्य अङ्गिराऋषिः बृहतीछन्दः बृहस्पतिर्दैवता वस्त्रपरिधाने विनियोगः ॥ १ ॥ इयन्दुरुक्तमित्यस्य वामदेवऋषिः त्रिष्टुप्० मेखला देवता मेखलाबन्धने विनियोगः ॥ २ ॥ यज्ञोपवीतमित्यस्य परमेष्ठी ऋषिः त्रिष्टुप्छन्दः लिङ्गोक्तादेवता श्रौतस्मार्तकर्मानुष्ठानफलसिद्ध्यर्थमुपवीतधारणे विनियोगः ॥ ३ ॥ मित्रस्य चक्षुरित्यस्य पर० ऋ० त्रि० लिं० दे० ऐणेयोत्तरीयधारणे विनियोगः ॥ ४ ॥ यो मे दण्ड इत्यस्य प्रजाप० यजुः०

दण्डो० दण्डग्रहणे वि० ॥ ५ ॥ आपोहिष्ठेति तिसृणां सिन्धुद्वीपऋषिः गायत्रीछन्दः आपोदेवता अञ्जलिपूरणे विनियोगः ॥ ६ ॥ तच्चक्षुरित्यस्य दध्यङ्ङाथर्वण० उष्णिक्छन्दः सूर्यो दे० सूर्यावेक्षणे वि० ॥ ७ ॥ मम व्रत-इत्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः बृहस्पतिर्देवता हृदयालम्भने वि० ॥ ८ ॥ इन्द्रस्येत्यस्य प्रजा० यजुः० लिङ्गोक्तादे० जपे वि० ॥ ९ ॥ प्रजापतये त्यादीनां प्रजाप० यजुः० लिङ्गो० रक्षणे वि० ॥ १० ॥ ॐ भूर्भुवः स्वरिति महाव्याहृतीनां प्रजा० क्रमेण गायत्र्युष्णिगनुष्टुप् छन्दांसि अग्निवायुसूर्या देवता त्वन्नो अग्ने सत्वन्नो अग्ने अयाश्चाग्ने ये ते शतमिति मन्त्राणां

वामदेवऋषिः त्रिष्टुप्छन्दः अग्नीवरुणौ देवते प्रथमयोस्तृतीयस्याग्निर्दै-
वता चतुर्थस्य वरुणःसविता विष्णुर्विश्वेदेवा मरुतः स्वर्का देवताः उदुत्त-
ममिति शुनःशेपऋषिः त्रि० वरु० सर्वेषामुपनयनाङ्गहोमे विनियोगः ॥ १८ ॥
ॐ तत्सवितुरित्यस्य विश्वामित्रऋषिः गायत्रीछन्दः सवितादेवता गाय-
त्र्यनुवाचने विनियोगः ॐ अग्ने सुश्रव इत्यादीनाम्ब्रह्माऋषिः यजूंषि०
अग्निर्देवता समिन्धने विनियोगः अग्नये समिधमित्यस्य प्रजा० आकृती
छन्दः सवितादेवता समिदाधाने वि० तनूपा अग्न इत्यादीनाम्बृहद्देवा
ऋषयः यजूंषि० अग्निर्देवता मुखविमर्शने वि० ॥ ४ ॥ अङ्गानि चम

इत्यादीनाम्प्रजा० उष्णि० लिङ्गो० भस्मना तिलकधारणे वि० ॥ ५ ॥ त्र्यायु-
षमित्यस्य नारायणऋषिः उष्णिक्छन्दः लिङ्गोक्तादेवता भस्मना तिलक-
करणे वि० ॥ ६ ॥ इत्यार्षादि स्मृत्वा अत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम्
अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम् सविता-
रम् विष्णुम् विश्वान्देवान्मरुतः स्वर्कान् वरुणम् प्रजापतिम् अग्निम् स्वि-
ष्टकृतम् एतादेवता अङ्गप्रधानार्थां आज्येनास्मिन्नुपनयनाख्ये कर्मण्यहं
यक्ष्ये ततः सुमङ्गल्यद्रव्यैः सुस्नातम्पुष्पसुवर्णाद्यैरलङ्कृतङ् कुमारं सान्तफ-
लहस्तम्पूर्वोक्तशुभमुहूर्ते आचार्यपुरुषाः आचार्यसमीपमानयन्ति आचार्यस्तु

पश्चादग्नेः स्वदक्षिणभागे उदङ्मुखमवस्थाप्य तम्ब्रह्मचर्यमागामिति ब्रूहि इति वाचयति कुमारः ब्रह्मचर्यमागामिति वदति आचार्यः ब्रह्मचार्यसानीति ब्रूहि इति वाचयति कुमारः ब्रह्मचार्यसानीति वदति आचार्यः अथैनं वासः येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम् । तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे इति मन्त्रेण परिधापयति माणवको द्विराचामति तत आचार्यो मुञ्जमयीम् त्रिवृताम् यथाप्रवरसङ्ख्यग्रन्थियुतां रशनाङ्कटिदेशे इयन्दुरुक्तम्परिबाधमाना वर्णम्पवित्रम्पुनतीम आगात् । प्राणापानाभ्यांबलमादधाना स्वसादेवीसुभगामेखलेयमिति मन्त्रेण बध्नीते केचि-

दिमम्मन्त्रम्मन्त्रलिङ्गात् माणवकम्पाठयन्ति तत आचार्येण गायत्र्या दशसङ्ख्ययाऽभिमन्त्रिताभिरद्भिरभ्युक्षितं यज्ञोपवीतन्दत्तम्माणवकः यज्ञोपवीतम्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात् । आयुष्यमग्र्यम्प्रतिमुञ्च शुभ्रं यज्ञोपवीतम्बलमस्तुतेजः इति मन्त्रेण धारयति द्विराचामति च तत ऐणेयमजिनमाचार्यस्तूष्णीम्प्रयच्छति माणवकः मित्रस्य चक्षुर्धरुणम्बलीयस्तेजोयशस्विस्थविरꣳ समिद्धम् । अनाहनस्यं वसनञ्जरिष्णुः परीदं वाज्यजिनन्दधेऽहमिति मन्त्रेण धारयति इत्युत्तरीयम् द्विराचामति आचार्यस्तूष्णीन्दण्डम्प्रयच्छति माणवकः यो मे दण्डः परापतद्वै हायसोऽधिभूम्याम् ।

तमहम्पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसायेति मन्त्रेण प्रतिगृह्णाति आचार्यस्त्वाञ्जलिस्थाभिरद्भिः आपोहिष्ठा० चक्षसे १ यो वः शिव० मातरः २ तस्माऽअरङ्ग० चनः ३ इति त्रिभिर्मन्त्रैर्माणवकाञ्जलिम्पूरयति सच तूष्णीमूर्द्ध्वमुत्क्षिपति आचार्यः सूर्यमुदीक्षस्व इति प्रेषयति माणवकः तच्चक्षुर्देवहितं० प्रतात् इति मन्त्रेण सूर्यमुदीक्षते अथाचार्यः मम व्रते ते हृदयन्दधामि मम चित्तमनुचित्तन्ते अस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् इति मन्त्रेण दक्षिणांसं समधिहृदयमालभते अथास्य दक्षिणं हस्तं गृहीत्वाऽऽह को नामासि माणवकः अमुकशर्म्माऽहम् भो ३

इति अथैनमाह कस्य ब्रह्मचार्यसि इति माणवकः भवतः आचार्यः इन्द्र-
स्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तव अमुकशर्मण इति अमुकश-
र्मन्निति वा पठति अथाचार्यः एनम्भूतेभ्यः परिददाति प्रजापतये त्वा
परिददामि देवायत्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि
द्यावापृथिवीभ्यान्त्वा परिददामि विश्वेभ्यस्त्वाभूतेभ्यः परिददामि सर्वे-
भ्यस्त्वाभूतेभ्यः परिददाम्यरिष्ट्यै इति मन्त्रेण अथ माणवकः प्रदक्षिणम-
ग्निम्परीत्योपविशत्याचार्योत्तरतः अत्र वा पूर्वोक्तन्देवताभिध्यानम् ततो
ब्रह्मवरणादि चरुं विना प्राकृतवत् प्राशनान्ते पवित्राभ्याम्मार्जनम् पवित्र-

प्रतिपत्तिः ब्रह्मन्नुपनयनाङ्गतया विहितमिदम्पूर्णपात्रन्तुभ्यमहं सम्प्रददे ब्रह्मा प्रतिगृह्य द्यौस्त्वेति जपति प्रणीताविमोकः आचार्यः अथैनꣳ सꣳ शास्ति ब्रह्मचार्यसि माणवकः असानि पुनराचार्यः अपोऽशान इति कुमारः अश्नानि आचार्यः कर्म कुरु इति माणवकः करवाणि आचार्यः मा दिवा सुषुप्थाः इति कु० न स्वपानि आचार्यः वाचं यच्छेति कुमा० यच्छानि आ-चार्यः समिधमाधेहीति कु० आदधानि आचार्यः अपोऽशान इति कुमारः अश्नानि आचार्यः अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखा-योपविष्टाय पादोपग्रहणपूर्वकमुपसन्नाय समीक्षमाणाय आचार्येण

समीक्षिताय संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा ॥ इति सावित्रीप्रदानकालविकल्पः ॥ सद्यस्त्वेव गायत्रीम्ब्राह्मणायानुब्रूयात् इतरयोस्त्विवच्छया विकल्पः त्रिष्टुभंराजन्यस्य देवसवितः प्रसुव इति जगतीं वैश्यस्य विश्वारूपाणि प्रतिमुञ्चते कविरिति सर्वेषां वा गायत्रीम् ओङ्कारव्याहृतिपूर्वकम्प्रथमम्पच्छपादम् ततोऽर्द्धर्चशः अर्द्धर्चमर्द्धर्चम् सर्वाञ्च तृतीयेन सहानुवर्तयन्बटुना ब्रूयात् अत्राग्नौ समिदाधानम् ब्रह्मचारिणः तत्र प्रथमस्पाणिनाऽग्निम्परिसमूहति पाणिना दक्षिणेनाऽग्निम्परिसमूहति सन्धुक्षयति वक्ष्यमाणैस्त्रिभिर्मन्त्रैः काष्ठप्रक्षेपेणेतिकारिकाकारः

अग्नेसुश्रवः सुश्रवसम्मा कुरु यथा त्वमग्नेसुश्रवः सुश्रवाऽ अस्येवम्माꣳ
सुश्रवः सौश्रवसङ्कुरु यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि एवमह-
म्मनुष्याणाम्वेदस्य निधिपो भूयासमिति वासुदेवमते तु द्वितीयमन्त्रमध्ये
अस्यान्तद्वयेऽपि प्रक्षेप इति पञ्चभिर्मन्त्रैः पञ्चकाष्ठप्रक्षेपः ततः प्रदक्षिण-
मग्निम्पर्युक्ष्योत्थाय समिधमादाय अग्नये समिधमाहार्षम्बृहते जातवेदसे
यथा त्वमग्ने समिधासमिध्यसऽएवमहमायुषामेधया वर्चसा प्रजयापशु-
भिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरि-
ष्णुर्यशस्वीतेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳ स्वाहा इत्यग्नावादधाति एव-

न्द्वितीयान्तथा तृतीयामनेनैव मन्त्रेण तत उपविश्य पूर्ववत् अग्नेसुश्रवइ-
त्यादिभिर्मन्त्रैः काष्ठप्रक्षेपेण परिसमूहनम् पर्युक्षणञ्च ततस्तूष्णीम्पाणी
प्रतप्य वक्ष्यमाणैरभिस्सप्तभिर्मन्त्रवाक्यैर्मुखम्बिमृष्टे तनूपाऽ अग्नेसि तन्वम्मे
पाहि आयुर्दाऽअग्ने स्यायुर्मे देहि वर्चोदाऽअग्नेऽसिव्वर्चोमे देहि अग्ने यन्मे
तन्वाऽऊनन्तन्मऽआपृण । मेधाम्मे देवः सविताऽआदधातु मेधाम्मे देवी
सरस्वतीऽ आदधातु मेधामश्विनौ देवावाधत्ताम्पुष्करस्रजौ इत्यङ्गान्या-
लभ्य जपति आदौ सर्वाङ्गान्यालभ्य पश्चात् अङ्गानि चमऽ आप्यायन्ताम्
मुखमालभ्य वाक्चमऽ आप्यायताम् नासापुटे आलभ्य प्राणश्चम आप्याय-

ताम् चक्षुषी आलभ्य चक्षुश्चम आप्यायताम् दक्षिणञ्छ्रोत्रमालभ्य श्रोत्र-ञ्चम आप्यायताम् वामञ्छ्रोत्रमालभ्य श्रोत्रञ्चम आप्यायताम् यशो बल-ञ्चम आप्यायताम् इति पाठमात्रम् ततो भस्मना त्र्यायुषञ्जमदग्नेः इति ललाटे तिलकङ् कुर्यात् कश्यपस्य त्र्यायुषमिति ग्रीवायाम् यद्देवेषु त्र्यायु-षमिति दक्षिणेंऽसे तन्नोऽअस्तु त्र्यायुषमिति हृदि ॥ अथाभिवादनम् ॥ उप-मन्युगोत्रः उपमन्युवासिष्ठाभरद्वस्वैन्द्रप्रमदेति त्रिप्रवरः अभिवादये हरदत्तशर्माऽहम् भो वैश्वानर एवमुपमन्यु॰ ऽहम्भो वरुण एवमाचार्याभि-वादनम् चोत्तानाभ्यान्दक्षिणवामहस्ताभ्यान्दक्षिणवामपादौ स्पृष्ट्वा शिरः

पादयोर्निधाय उपमन्युगोत्रः उपमन्युवासिष्ठाभरद्वस्वैन्द्रप्रमदेति त्रिप्रवरः अभिवादये हरदत्तशर्म्माऽहम्भो ३ आचार्य स्वङ्कुर्वादीनप्यभिवाद्यानभिवादयेत् गुर्वादिस्तु आयुष्मान्भव सौम्य हरदत्तशर्मन् इति प्रत्यभिवादयेत् ॥ अत्रावसरे भिक्षाचर्यम् भिक्षा वृत्तिस्तस्याश्चरणमनुष्ठानम् यथा दण्डम्प्रतिगृह्य सावित्र्याऽऽदित्यमुपस्थायाग्निम्प्रदक्षिणीकृत्य प्रथमम्मातरम् ॐ भवति भिक्षान्देहि इति भिक्षेत् तया दत्तायाम्भिक्षायाम् ॐ स्वस्ति इति ब्रूयात् पुरुषन्तु भवन् भिक्षान्देहि इति ब्रह्मचारी क्षत्रियश्चेत् भिक्षाम्भवति देहि इति वैश्यश्चेत् भिक्षान्देहि भवति इति ॥ तत आचा-

र्याय भैक्ष्यन्निवेदयित्वा तेन भुङ्क्ष्वेत्युक्तस्स्वीकरोति ॥ अहिंसन्स्वय-
म्प्रशीर्णमरण्यात्समिधमाहृत्य तस्मिन्नग्नौ सायं सन्ध्योत्तरम्पूर्ववत्परिस-
मूहनपूर्वकमाधाय त्र्यायुषान्तङ्करोति तत आचार्यो नियमाञ्छ्रावयेत्
ब्रह्मचार्यनुतिष्ठेत् ॥ अधश्शायी स्यात् अक्षारालवणाशी दण्डधारणम्
सायम्प्रातरग्निपरिचरणम् गुरुशुश्रूषा स्वाध्यायाविरोधेन सायम्प्रातर्भि-
क्षाचर्या मधुमांसम्वर्जयेत् मज्जनम् उपर्यासनम् स्त्रीगमनम् तन्मध्ये ऽव-
स्थानमित्यर्थः । अनृतम् अदत्तादानम् चौर्यमित्यर्थः आवेदसमाप्तेर्ब्रह्म-
चर्यञ्चरेत् शौचा ऽऽचारांश्च शिक्षयेत् सायं सन्ध्यान्ते आचमनप्राणायाम-

देशकालकीर्तनान्ते परमेश्वरप्रीतये समिदाधानङ्करिष्ये इति सङ्कल्प्य तत्परिसमूहनादि त्र्यायुषान्तङ्कर्तव्यम् तत अपोशानपूर्वकम्प्राङ्मुखो भुङ्क्ते शयानश्चेदाचार्येणाहूत उत्थाय प्रतिशृणुयात् आसीनश्चेत्तिष्ठन् तिष्ठँश्चेदभिक्रामन् अभिक्रामँश्चेदभिधावन् ॥ इति श्री सप्तर्ष्युपाख्यनरहरिभट्टविरचिते संस्कारनृसिंहे उपनयनं समाप्तम् ॥ अथ वेदारम्भः ॥ स च द्वि स्वभावलग्ने स्थिरनक्षत्रवर्जिते उपनयनोक्तमुहूर्ते आचार्यः कृतनित्यक्रियः पञ्चमहायज्ञः कृतनित्यक्रियेण बटुना सहाचमनप्राणायामत्रयदेशकालकीर्तनान्ते ब्रह्मयज्ञादि श्रौताधानद्वारा परमेश्वरप्रीतये अस्य

ब्रह्मचारिणोवेदारम्भनिमित्तं स्वस्तिवाचनम्मातृकापूजनम्वसोर्द्धारापूजन-
मायुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थङ्गणेशपू-
जनमहङ्करिष्ये इति सङ्कल्प्य तत्कृत्वा पञ्चभूसंस्कारपूर्वकं लौकिकाग्निस्था-
पनम् पुनर्दैवाकालौ स्मृत्वा अस्य ब्रह्मचारिणो वेदारम्भमहङ्करिष्ये ॥ अथ
वैकल्पिकानि चतुर्णां वेदानामारम्भः पूर्वेण ब्रह्मणो गमनमित्यादि पूर्ण-
पात्रन्दक्षिणेत्यन्तम्प्राकृतम्भूरादीनामुदुत्तममित्यन्तानाम् ऋष्यादिस्मरणञ्च
अत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अन्तरिक्षम् वायुम् ब्रह्माणम्
छन्दाꣳसि पृथिवीम् अग्निम् ब्रह्माणम् छन्दाꣳसि दिवम् सूर्यम् ब्रह्मा-

णम् छन्दाꣳसि दिशः चन्द्रमसम् ब्रह्माणम् छन्दाꣳसि प्रजापतिम् देवान्
ऋषीन् श्रद्धाम् मेधाम् सदसस्पतिम् अनुमतिम् अग्निम् वायुम् सूर्यम्
अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम् सवितारम् विष्णुम् विश्वा-
न्देवान्मरुतः स्वर्कान् वरुणम् प्रजापतिम् अग्निम् स्विष्टकृतम् एता देवता
अङ्गप्रधानार्था आज्येनास्मिन्वेदारम्भाख्ये कर्मण्यहं यक्ष्ये । ब्रह्मवरणादि
चरुं विना आज्यभागान्ते प्राकृतवत् ॐ अन्तरिक्षाय स्वाहा इदमन्तरिक्षाय
नमम वायवे स्वाहा ब्रह्मणे० छन्दोभ्यः० पृथिव्यै० अग्नये ब्रह्मणे० छन्दो
भ्यः० दिवे० सूर्याय० ब्रह्मणे० छन्दोभ्यः० दिग्भ्यः० चन्द्रमसे० ब्रह्मणे०

छन्दोभ्यः० प्रजापतये० देवेभ्यः० ऋषिभ्यः० श्रद्धायै० मेधायै० सदसस्पतये० अनुमतये० ततो भूरादिस्विष्टकृदन्ताः प्रकृतिवत् संस्रवप्राशनम् पवित्राभ्याम्मार्जनम् पवित्रप्रतिपत्तिः ब्रह्मन्वेदारम्भाङ्गतया विहितमिदम्पूर्णपात्रन्तुभ्यमहं सम्प्रददे स च द्यौस्त्वा० प्रणीताविमोकः ॥ ततो गणेशम् सरस्वतीम् लक्ष्मीम् नारायणम् विद्याञ्च सम्पूज्य आचार्यः प्रागग्रदर्भोपर्यासनोपविष्टः आचम्य प्राणायामत्रयान्ते शीर्षण्याणीन्द्रियाणि दर्भैस्सम्मार्ज्य प्रत्यङ्मुखायोपविष्टाय समीक्ष्यमाणायोर्द्ध्वजानुद्वयस्थितसंयतहस्तद्वयाय ओङ्कारव्याहृतिसावित्रीति ब्रह्ममुखमुच्चार्य प्रणवपूर्वकम्वेदादिमारभेत् ब्रह्म-

चार्यधीत्यान्ते च ब्रह्ममुखम्प्रणवम्वोच्चारयेत् आदावन्ते च गुरोः पा-
दोपसङ्ग्रहणङ् कुर्यात् एवम्प्रतिदिनं स्वशाखामधीत्यान्याम्पठेत् मुण्डी
जटी वा शिखी वा सन् ॥ इति वेदारम्भः ॥ ब्रह्मचारी ब्रह्मलोपप्राय-
श्चित्तानि कामतो रेतस्स्कन्दने नैर्ऋतश्चरुः स्वप्ने रेतस्स्कन्दनेन स्नात्वाऽर्क-
मर्चयित्वाऽग्निप्रतिष्ठापनादि स्विष्टकृदन्ते कामावकीर्णोऽस्म्यवकीर्णो-
ऽस्मि कामकामाय स्वाहा इदङ्कामाय नमम कामाभिदुग्धोऽस्म्यभिदुग्धो-
ऽस्मि कामकामाय स्वाहा इदङ्कामाय नमम इत्याहुतिद्वयं हुत्वा अथोप-
तिष्ठते समासिञ्चन्तु मरुतः समिन्द्रः सम्बृहस्पतिः सम्मायमग्निः सवितुः

प्रजया च धनेन च इति त्रिर्जपेत् । उपवीतादिनाशे मनोजूतिरित्याहुतिः
सन्ध्याग्निकार्यलोपे अष्टसहस्रगायत्रीजपः गोमणिवस्त्रप्रतिग्रहे च भिक्षा-
गुरुशुश्रूषालोपे अष्टशतञ्जपेत् मधुमांसभक्षणे अर्द्धकृच्छ्रम् दण्डोपवीतमे-
खलालोपे व्याहृतिभिराज्यहोम इति ॥ अथ केशान्तः ॥ षोडशवर्षे सप्त-
दशे चौलोक्तकाले कृतनित्यक्रिय आचार्यः कृतनित्यक्रियेण बटुना सहोप-
विश्याचम्य देशकालौ स्मृत्वा अस्य ब्रह्मचारिणः केशान्तकर्म कर्तुन्तद-
ङ्गपुण्याहवाचनपूर्वकमविघ्नपूजनम्मण्डपस्थापनम्मातृकापूजनम्वसोर्द्धारापू-
जनन्नान्दीश्राद्धञ्चाहङ्करिष्ये तत्कृत्वाऽग्निं संस्थाप्य पुनरस्य कुमारस्य के-

शान्तमहङ्करिष्ये इति सङ्कल्प्य चौलवद्विकल्पस्मरणान्ते ऽत्र त्रिरात्रम्ब्रह्म-
चर्यम् चौलवदेव पात्रासादनोपकल्पनीयानि वरस्थाने गौः चौलवत्प्र-
णीताविमोकान्तम् उष्णेन वा य उदकेनेत्यादिते केशान् प्रमश्रुवप इत्यूहः
त्रिः क्षुरेण सम्मुखः शिरः परिहरति यत्क्षुरेण म० प्रमोषीर्मुखम् इति वि-
शेषः अन्यत्सर्वञ्चौलवत् ॥ इति केशान्तङ्कर्म ॥ इदमेव गोदानमिति ॥ अथ
ब्रह्मचारी व्रतलोपनिमित्तङ् कृच्छ्रत्रयङ् कृत्वा प्रायश्चित्तहोमङ्करिष्ये इति
सङ्कल्प्यानादिष्टहोमङ् कुर्यात् ततस्समावर्तनङ्कार्यम् ॥ अथ समावर्तनम् ॥
तच्च वेदꣳ समाप्य स्नायात् ॥ ब्रह्मचर्यं वा गुर्वाज्ञया वा उपनयनोक्तकाले

गुरवे दक्षिणान्दत्वा गुरुन्नत्वा स्नास्ये इति पृष्ट्वा स्नाहीत्यनुज्ञाय गुरुः कृतनित्यक्रियपञ्चमहायज्ञः कृतनित्यक्रियेण ब्रह्मचारिणा सहाऽऽचम्य प्राणानायम्य देशकालकीर्तनान्ते अस्य ब्रह्मचारिणस्समावर्तनङ्कर्तुन्तदङ्ग-स्वस्तिवाचनपूर्वकमातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्नान्दीश्राद्ध-ञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थङ्गणेशपूजनमहङ्करिष्ये इति सङ्क-ल्प्य तत्कृत्वा वस्त्रेण कटादिना वा परिश्रिते परितो वेष्टिते स्थले कुशोपर्याचार्यः प्राङ्मुख उदङ्मुखब्रह्मचारिणा सहोपविश्य पञ्च भूसं-स्कारपूर्वकं लौकिकाग्निम्प्रतिष्ठाप्य पुनर्देशकालौ सङ्कीर्त्य अस्य ब्रह्मचा-

रिणः गृहस्थाद्याश्रमप्राप्तिद्वारा परमेश्वरप्रीतये समावर्तनाख्यङ्कर्म करिष्ये ब्रह्मचारी तु अहं स्नास्य इति सङ्कल्प्य पूर्वेण ब्रह्मणो गमनम् अपरेण पात्रासादनम् द्वे पवित्रे ताम्रमय्याज्यस्थाली पालाश्यस्समिधः प्राज्ञात्राघारौ समिद्धतमे आज्यभागौ पूर्णपात्रन्दक्षिणा गुर्वनुज्ञया समावर्तनम् दधिप्राशनम् अमौत्रन्धौतं वस्त्रम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये ॐ भूर्भुवः स्वरित्यादि उदुत्तममित्यन्तानामृष्यादि उपनयनवत्स्मृत्वा स्नानाङ्गहोमे विनियोगः अथ ब्रह्मचारिणो मन्त्राणामृष्यादि अग्ने सुश्रवइत्यादीनान्त्र्यायुषान्तमुपनयनवत् अथ येऽप्स्वन्तरित्यस्य प्रजापति॰ यजुः॰

आपो देवता उदकग्रहणे विनियोगः १ तेन मामित्यस्य प्रजा० यजुः०
आपो० अभिषेचने वि० २ येन श्रियमित्यस्य प्रजा० यजुः० आपो० अभि-
षेच० ३ आपो हिष्ठेति तिसृणां सिन्धुद्वीपऋषिः गायत्रीछन्दः आपो देव-
ता अभिषेच० ४ उदुत्तममित्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो दे०
मेखलोन्मोके विनियोगः ५ उद्यन्भ्राजभृष्णुरित्यस्य प्रजा० अतिशक्करी छन्दः
आदित्यो दे० उपस्थाने० ६ अन्नाद्यायेत्यस्य अथर्वणऋषिः अनुष्टुप्० सोमो
दे० दन्तधावने वि० ७ प्राणापानावित्यस्य प्रजा० यजुः० प्राणापानौ देवते
चन्दनोपग्रहणे वि० ८ पितरः शुन्धध्वमित्यस्य प्रजा० यजुः० अग्निसरस्वती-

न्द्रादेवताः पाद्यवनेजनस्य दक्षिणानिषेके वि० ९ सुचक्षा अहमित्यस्य
प्रजा० यजुः० आशीर्देवता जपे वि० १० परिधास्या इत्यस्य आलम्बायन-
ऋषिः पङ्क्तिश्छन्दः वासो देवता वस्त्रपरिधाने वि० ११ यज्ञोपवीतमित्यस्य
परमेष्ठीऋषिः त्रिष्टु० लिङ्गोक्तादे० उपवीतधारणे वि० १२ यशसामेत्यस्य
अथर्वणऋषिः पङ्क्तिश्छन्दः लिङ्गोक्ता दे० उत्तरीयधारणे वि० १३ या आह-
रदित्यस्य भरद्वाजऋषिः अनुष्टुप्० सुमनसो० पुष्पग्रहणे वि० १४ यदाश
इत्यस्य भरद्वाजऋषिः अनुष्टु० सुमनसो दे० पुष्पधारणे विनि० १५ युवासु-
वासा इत्यस्य विश्वामित्रऋषिः त्रिष्टु० युवोदे० परिव्ययने वि० १६ अल-

ङ्करणमित्यस्य भरद्वाजऋषिः उष्णिक् छ० अलङ्करणन्दैवतम् अलङ्करण-
धारणे वि० १७ वृत्रस्येत्यस्य प्रजा० गायत्री०अञ्जनन्दैवतम् चक्षुरञ्जने वि०
१८ बृहस्पतेश्छदिरित्यस्य गौतमऋषिः त्रिवृद्गायत्री छन्दः छत्रन्दैवतम्
छत्रग्रहणे वि० १९ प्रतिष्ठेस्थ इत्यस्य विश्वामित्रऋषिः विराट् छन्दः
लिङ्गोक्तादेवता उपानत्प्रतिमोके वि० २० विश्वाभ्य इत्यस्य याज्ञवल्क्य-
ऋषिः त्रिष्टुप् छन्दः दण्डो दे० दण्डधारणे विनियोगः २१ ॥ अथ देवताभि-
ध्यानम् ॥ अत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अन्तरिक्षम् वायुम्
ब्रह्माणम् छन्दांꣳसि पृथिवीम् अग्निम् ब्रह्माणम् छन्दांꣳसि दिवम् सूर्यम्

ब्रह्माणम् छन्दांꣳसि दिशः चन्द्रमसम् ब्रह्माणम् छन्दांꣳसि प्रजापतिम्
देवान् ऋषीन् श्रद्धाम् मेधाम् सदसस्पतिम् अनुमतिम् अग्निम् वायुम्
सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम् सवितारम् विष्णुम् वि-
श्वान्देवान्मरुतः स्वर्कान् वरुणम् प्रजापतिम् अग्निम् स्विष्टकृतम् एता
देवता अङ्गप्रधानार्था आज्येनास्मिन्समावर्तनाख्ये कर्मण्यहं यक्ष्ये ब्रह्मव-
रणादिपूर्णपात्रान्तानि उपकल्पनीयानि समिन्धनकाष्ठानि षट् दश वा समि-
धस्तिस्रः पर्युक्षणार्थमुदकम् हरिताः कुशाः अष्टावुदकुम्भाः वासोऽन्यत्
दधि नापितः स्नानार्थमुदकम् औदुम्बरन्द्वादशाङ्गुलन्दन्तकाष्ठम् उद्वर्तन-

द्रव्यम् चन्दनम् अहते वाससी यज्ञोपवीते पुष्पाणि उष्णीषम् कर्णवेष्टकौ अञ्जनम् दर्पणम् नूतनञ्छत्रम् वैणवो दण्डः एतान्युपकल्प्य पवित्रकरणादि-पवित्रप्रतिपत्यन्तम्वेदारम्भवत् ब्रह्मन् समावर्तनाङ्गतया विहितमिद-म्पूर्णपात्रन्तुभ्यमहं सम्प्रददे स च द्यौस्त्वा० प्रणीताविमोकः इदमस्मात्पूजा। श्राद्धमेतावदाचार्यकर्त्तृकमिति केचित् गोभिलमते तु सर्वम्ब्रह्मचारीक-र्त्तृकमेव तथैव कारिकाकारगङ्गाधराद्यैरङ्गीकृतम् अतः परम्ब्रह्मचार्यस्मिन्ने-वाग्नौ पूर्ववदग्नेसुश्रव इत्यादि त्र्यायुषान्तङ् कृत्वा परिश्रितस्योत्तरत उदकपूर्णानष्टौ कुम्भानुदक् संस्थान्निधाय तत्पूर्वतः प्रागग्रेषु हरितेषु कुशेषु

आस्तृतेषु उदङ्मुखः स्थित्वा ब्रह्मचारी गङ्गाधरमते तु प्रत्यङ्मुखस्ति-
ष्ठन् एकस्मात्कुम्भादञ्जलिना ॥ ये ऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो
मयूखो मनोहास्खलो विरुजस्तनूदूषुरिन्द्रियहातान्विजहामि यो रोचन-
स्तमिह गृह्णामि ॥ आपो गृहीत्वा प्राङ्मुखो भूत्वा तेनाञ्जलिस्थोदकेन
तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति। येन श्रियमकृ-
णुतां येनावमृषताᳪं सुरां येनाक्ष्यावभ्यषिञ्चतां यद्वान्तदश्विना यशः इत्य-
भिषिञ्चते एवन्द्वितीयोदकुम्भादञ्जलिनोदकमादाय आपो हिष्ठा० चतसृ
इत्यभिषिञ्चते ततो ये ऽप्स्वन्तरिति तृतीयकुम्भादञ्जलिनोदकमादाय यो.

वः शिव० मातरः इत्यभिषिञ्चते ततश्चतुर्थकुम्भादञ्जलिना जलमादाय तस्मा
अरङ्ग० यथाचनः इत्यभिषिञ्चते तूष्णीमितरैश्चतुर्भिः इति कारिकाकारग-
ङ्गाधरादयः। तत्रापि प्रथमकुम्भाज्जलग्रहणं येऽप्स्वन्तरिति मन्त्रेण इतरेभ्य-
स्तूष्णीमिति तदाशयः तेषु मन्त्रानुपदेशात् अन्ये तु सर्वेभ्यो
मन्त्रेण जलग्रहणम् तेन मामभिषिञ्चामि इति प्रथमोऽभिषेकमन्त्रः येन श्रि-
यमकृणुतामिति द्वितीयः आपोहिष्ठेति तृतीयः योव इति चतुर्थः तस्मा-
ऽअरङ्ग इति पञ्चमः इतरैस्त्रिभिस्तूष्णीमिति ततो मेखलाम् उदुत्तमम्वरुण-
पाशमस्मदवाधमं० स्याम इति शिरोमार्गेणोन्मुच्य दण्डाजिने त्यक्त्वा तूष्णीं

वासोऽन्यत्परिधायाऽऽचम्य आदित्यम् उद्यन्भ्राजभृष्णुरिन्द्रोमरुद्भिरस्थात्प्रा-
तर्यावभिरस्थाद्दशसनिरसिदशसनिम्माकुर्वाविदन्मागमय उद्यन्भ्राजभृष्णु-
रिन्द्रोमरुद्भिरस्थाद्दिवायावभिरस्थाच्छतसनिरसिशतसनिम्माकुर्वाविदन्मा-
गमय उद्यन्भ्राजभृष्णुरिन्द्रोमरुद्भिरस्थात्सायंयावभिरस्थात्सहस्रसनिरसिस-
हस्रसनिम्माकुर्वाविदन्मागमय इत्युपतिष्ठते दधि प्राशयेत् जटालोमनखा-
नि संहृत्य शीतोदकेन स्नात्वा औदुम्बरेण दन्तान् अन्नाद्यायव्यूहध्वꣳ
सोमोराजाऽयमागमत् स मे मुखम्प्रमार्क्ष्यते यशसा च भगेन च धावेत्
तत्काष्ठम्भङ्क्त्वा प्रक्षाल्य प्राग्वोदग्वा क्षिपेत् मङ्गलोद्वर्तनेन पुनस्स्नात्वोष्णो-

दकेन अनुलेपनम्पाणिभ्यां प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पय इति नासिकयोर्मुखस्य चोपगृह्णीते पाण्योरवनेजनङ् कृत्वा तदुदकमञ्ज-लिना प्राङ्मुखः पितरः शुन्धध्वमिति दक्षिणादिशि निषिञ्चेत् अपसव्ये-नेति वासुदेवः अप उपस्पृश्य चन्दनेनानुलिप्य तूष्णीम्पश्चात्। सुचक्षा अहमक्षीभ्याम् भूयासꣳसुवर्चामुखेन सुश्रुत्कर्णाभ्याम्भूयासम् इति जपेत् अहतं वासः। परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि शतञ्जी-वामि शरदःपुरूचीरायस्पोषमभिसंव्ययिष्ये इति परिधायाचम्य प्रक्षालित-म्पूर्वं यज्ञोपवीतञ्जले निक्षिप्यान्यत् यज्ञोपवीतमिति मन्त्रेण धारयेत् आ-

चम्य वा मन्त्रावृत्त्या द्वितीयम्वा अथोत्तरीयम् । यशसामाद्यावापृथिवीयशसे-न्द्राबृहस्पती यशोभगश्चमाविदद्यशोमाप्रतिपद्यताम् । इति परिधत्ते द्विती-याभावे पूर्वस्योत्तरवर्गेण यशसामेति उत्तरीयङ् कुर्यात् अथ वा चतुस्त्रि-ह्यङ्गुलेनोपवीतेनैव वा मन्त्रेणोत्तरीयङ् कुर्यात् द्विराचम्य आचार्यदत्ता-स्सुमनसः । या आहरज्जमदग्निः श्रद्धायै कामायेन्द्रियाय ता ऽअहम्प्रतिगृ-ह्णामि यशसा च भगेन च । इति प्रतिगृह्णाति । अथ शिरसि यद्यशोऽप्सरसा-मिन्द्रश्चकारविपुलम्पृथु तेन सङ्ग्रथिताः सुमनस आबध्नामि यशोमयि इति बध्नीते । उष्णीषेण शिरः युवासुवासाः परिवीत आगात्स उश्रेयान्भवति

जायमानः तन्धीरासःकवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः इति वेष्ट-
येत् ततस्सौवर्णङ् कुण्डलन्दक्षिणे कर्णे अलङ्करणमसि भूयोऽलङ्करणम्
भूयात् इति धारयति अनेनैव मन्त्रेण वामकर्णे च ततोऽञ्जनेन वृत्रस्यासि
क० मे देहि इत्यनेन दक्षिणमक्षि अनेनैव वामं तत आत्मानमादर्शे रोचिष्णु-
रसि इति प्रेक्षते । ततः छत्रम् बृहस्पते च्छदिरसि पाप्मनो मामन्तर्द्धेहि तेज-
सो यशसो मामन्तर्द्धेहि इति प्रतिगृह्णाति । अथोपानहौ प्रतिष्ठेस्थोविश्व-
तोमापातमिति युगपत्प्रतिमुञ्चते पादयोः ततो वैणवन्दण्डम् विश्वाभ्योमा-
नाष्ट्राभ्यः परिपाहिसर्वतः इत्यादत्ते दन्तप्रक्षालनादीनि नित्यमपि मन्त्रेण

भवति वासश्छत्रोपानहामपूर्वाणामेव मन्त्राः ततो गुरुस्तं स्नातकञ्चतुरङ्गा-
दितल्पे उपवेश्य चन्दनपुष्पवस्त्रादिना पूजयेत् स च तस्मिन् दिने गुरुस-
न्निधौ वसेत् अथ वा तदनुज्ञया गच्छेत् इति समावर्तनम् ॥ अथास्य स्नातस्य
नियमाः नृत्यगीतवादित्राणि न कुर्यात् अन्यैः क्रियमाणानि न गच्छेत् काम-
ङ्गायति रमते च गीते क्षेमे नक्तङ्ग्रामान्तरन्न गच्छेत् नग्नस्नानविषमलङ्घना-
श्लीलवदनसन्ध्योपरक्तवारिस्थादित्येक्षणानि न कुर्यात् न भिन्द्यात् वर्षति सति
अयम्मेवज्रः पाप्मानमपहनत् इति मन्त्रेण व्रजेत् अप्रावृतएव अप्स्वात्मान-
न्नावेक्षेत कालेप्यजातलोम्नीं विप्रोषेण पुरुषाकृतिं स्त्रियं षण्ढञ्च नोपहसेत्

न च गच्छेत् गर्भिणीं विजन्येति ब्रूयात् नकुलन्तु सकुलमिति भगालमिति
कपालम् मणिधनुरितीन्द्रधनुः गान्धयन्तीम्परस्मैनाचक्षीत सस्यवत्याम्भूमौ
तृणाद्यनन्तर्हितायाञ्च मूत्रपुरीषे न कुर्यात् तथोत्सर्पंस्तिष्ठँश्च न कुर्यात् स्व-
यम्प्रशीर्णेन काष्ठेन गुदम्प्रमृजीत नील्यादिरक्तन्नाच्छादयीत दृढव्रतस्स्यात्
वधात्सर्वान् रक्षेत् सर्वेषाम्मित्रमिव भवेत् एते धर्माः यावज्जीवम् ॥ अथ
त्रिरात्रनियमाः अमांसाशी स्यात् मृन्मयपायी स्यात् अवीरायाः स्त्रिया
अन्नन्नाद्यात् नापितादेरपि शूद्रस्यान्नम् शवसूतकान्नम् मृतसूतकान्नञ्च क्रीतं
लब्धम्वाऽन्नन्तैर्भुज्यते तन्नाद्यात् स्त्रीशूद्रशवकृष्णशकुनिशुनान्दर्शनं सम्भा-

षणाञ्च न कुर्यात् मूत्रपुरीषे ष्ठीवनञ्चातपे न कुर्यात् सूर्याच्चात्मानन्नान्तर्द-
धीत छत्रादिना तप्तेनोदकार्थान्कुर्वीत अवज्योत्य दीपादिना रात्रौ भोज-
नञ्चेत्क्रियते सत्यवदनमेव वा नियमेन कर्तव्यम् नाधस्तना अमांसाशा-
नादयः दीक्षितोऽपि प्रवर्ग्यवांश्चेत् तर्हि आतपादीनि मूत्रपुरीषे ष्ठीवन-
ञ्चातपे न कुर्यादित्यादीनि कुर्यात् इति त्रिरात्रधर्माः वृतस्य ॥ अथ विवा-
हम्वक्तुन्तदुपयुक्तङ्किञ्चिदुच्यते ॥ अरोगिणीम्भ्रातृमतीमसमानार्षगोत्रजाम्
असपिण्डा च या मातुरसगोत्रा च या पितुरित्याद्युक्तेः समानगोत्रां लक्षण-
लक्षितैकगोत्रां समानप्रवराम्पञ्चानान्त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः

भृग्वङ्गिरोगणेष्वेवमृतेभृग्वङ्गिरोगणादित्युक्तप्रवरसमान्नोद्वहेत् तथा पितृमा-
तृसपिण्डाञ्च यथा वरकन्ययोर्मातृद्वारकसम्बन्धे सति वरस्य कन्याया वा
माता चेन्मूलपुरुषात्पञ्चमस्थाने समागता तदा तयोस्सापिण्ड्यनिवृत्तिः पि-
तृद्वारकसम्बन्धे सति वरस्य कन्याया वा पिता चेत्सप्तमस्थाने समागतस्तदापि
तत्सापिण्ड्यनिवृत्तिः तदर्वाक् विवाहो न कार्य एव सापत्नमाता चेत्तयोश्च-
तुर्थस्थानेऽस्ति तदैव सापिण्ड्यनिवृत्तिः तथा असापिण्ड्येऽपि वरवध्वो-
र्मिथः पितृमातृसाम्ये यथा पितृव्यपत्नीभगिनीम्भार्यास्वसुर्दुहितरमित्यादि
नोपयच्छेत् तथा हीनाधिकाङ्गरहिताङ् कुष्ठादिमहादोषवर्जिताम्परिणयेत्

तथैव वरमप्येतैर्दोषै रहितं रूपवन्तम्पण्डितम्प्राज्ञं यत्नात्पुंस्त्वे सुपरीक्षितं वृणुयात् तत्रापि वर्णैक्ये वरस्योत्तमवर्णे वा परस्परम्भद्रयविवर्जितराशौ ताराशुद्धौ योनिग्रहमैत्र्यां सद्राशिकूटे एकनाडीहीने मेलके सति सिंहस्थगुरुभृग्वस्तबाल्यवृद्धत्वाधिकक्षयमासवर्जितमार्गशीर्षे माघादिचैत्रवर्जितपञ्चमासे आषाढस्यापि मिथुनार्कयुक्ताद्यत्रिभागे शुक्ले द्वितीयादित एव कृष्णपक्षे दशम्यन्तगताश्शुभास्स्युः तास्वष्टमीस्कन्दगणेशदुर्गाचतुर्दशीचापि तिथिर्विवर्ज्यैति। वशिष्ठः मासान्ते पञ्चदिवसान् त्यजेद्रिक्तामष्टमीम्। विष्टिञ्च परिघस्यार्द्धं व्यतीपातं सवैधृतमिति नारदश्च ॥ शुक्लेतूदयादिषष्ठ्यष्टमीरिक्तावर्जि-

तत्कृष्णादशमीपर्यन्ततिथौ अनुकूले चतुर्थाष्टमद्वादशवर्जिते गुरौ चन्द्रसङ्क्रा-
न्तिव्यतीपातवैधृतिपरिघार्द्धभद्रागण्डान्तमहापातरहिते दिवसे ग्रहणोत्पा-
तादिदोषविनिर्मुक्ते क्रूरभोगवेधरहिते उत्तरात्रयरोहिणीमृगमघाहस्तस्वात्य-
नुराधामूलरेवतीनक्षत्रे जन्मलग्नराश्यष्टमराशिविहीने चन्द्रपापरहिते
स्वस्वामिशुभग्रहनिरीक्षितलग्नेंशे च शुभाधिकवर्गे चन्द्रशुक्रवर्जितषष्ठ-
स्थाने क्रूरहीनसप्तमस्थाने शुभभौमवर्जिताष्टमस्थाने चन्द्ररहिते द्वादश-
स्थाने तृतीयशुक्रवर्जिते विषनाडीकुलिकार्द्धयामवीहीने मुहूर्त्ते कर्त्तव्यतया
विवाहन्निश्चित्य तत्प्राक् पूर्वात्रयकृत्तिकाश्रवणधनिष्ठासहितविवाहोक्तकाले

कुमारीं वरञ्च वृणुयात् तद्यथा द्वौ चतस्रोऽष्टौ वा प्रशस्तवेशास्तावतीभिः पुरन्ध्रीभिश्शकुनपूर्वकम् मङ्गलगीतवाद्यैः कन्यागृहमेत्य शुभे सवस्त्रपीठे प्राङ्मुखीं सालङ्कारां सुवेशाङ्कन्यामुपवेश्य तद्धस्ते फलताम्बूलादि दत्वा कन्यावामभागे तत्पित्रादिरुपविश्य तत्पुरत उदङ्मुखो वरपित्रादिः उभावपि श्रीगणपत्यादिस्मरणपूर्वकन्देशकालौ सङ्कीर्त्य सवङ्गुणविशिष्टे काले कन्यावरणमहङ्करिष्य इति सङ्कल्प्य इति वरपित्रादिः कन्यादाता तु करिष्यमाणामुख्यब्राह्म्यविवाहाङ्गभूतस्वाग्दानमहङ्करिष्ये इति सङ्कल्प्य तत्र निर्विघ्नतासिध्यर्थङ्गणेशपूजनङ्कलशपूजनञ्च करिष्ये यथोक्तम्पूजनङ् कृत्वा ब्राह्म-

णांश्च गन्धाक्षतैस्सम्पूज्य वरपित्रादिः अदकगोत्रायादकप्रवरायादकप्रपौत्राया-
दकपौत्रायादकपुत्रायादकनाम्ने वराय अदकगोत्रामदकप्रवरामदकप्रपौत्रीम-
दकपौत्रीमदकपुत्रीमदकनाम्नीङ्कन्याम्भार्यात्वाय वृणीमहे इति ब्रूयात् दाता
वृणीध्वमिति प्रतिवदेत् एवं पुनर्द्विः दाता पुनः प्रदास्यामीति त्रिरुच्चैर्वदेत्
ततो वरपित्रादिः गन्धपुष्पवस्त्रालङ्कारैः कन्याम्पूजयेत् ततो दाता गन्धा-
द्यैर्वरपित्रादिकम्पूजयेत् स च दातारम् । ततो दाता हरिद्राखण्डपञ्च हृद्ध-
पूगीफलगन्धाक्षतानि गृहीत्वा अदकगोत्रायादकप्रवरायादकप्रपौत्रायादक-
पौत्रायादकपुत्रायादकशर्मणे वराय अदकगोत्रामदकप्रवरामदकप्रपौत्रीम-

दकपौत्रीमदकपुत्रीमदकनाम्नीमिमाङ्कन्याम् ज्योतिर्विदादिष्टे मुहूर्तै प्रदास्ये इति वाचा सम्प्रददे इत्युक्त्वा । अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते इमाङ्कन्याम्प्रदास्यामि देवाग्निपितृसन्निधौ । इत्युच्चार्य वरपित्रादिः वस्त्रप्रान्ते तानि प्रक्षिपेत् स च मनोजूतिरिति मन्त्रेण बध्वा गन्धाक्षतैः पूजयित्वा स्वयञ्च हरिद्राखण्डपञ्चपूगाक्षतानि गृहीत्वा अदकगोत्रायादकप्रवरायादकप्रपौत्रायादकपौत्रायादकपुत्रायादकनामकवरविषये भवन्तो निश्चिता भवन्तु इति दातृवस्त्रप्रान्ते प्रक्षिपेत् स च मनोजूतिरिति बध्वा सम्पूज्य। वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया। कन्यावलोकनविधौ निश्चितस्त्वं

सुखी भव इति वदेत् वरपिता तु वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया वरावलोकनविधौ निश्चितस्त्वं सुखी भव इति तम्प्रति वदेत् भ्रात्रादौ स्वीकारे भ्रात्रर्थमित्यूहः ततो ब्राह्मणाः शिवा आपः सन्तु सौमनस्यमस्तु अक्षतञ्चारिष्टञ्चास्तु दीर्घमायुश्शान्तिः पुष्टिस्तुष्टिश्चास्तु एतद्वस्सत्यमस्तु इति पठेयुः दाता पात्रस्थतण्डुलेषु शचीम् अदित्यै रास्नासीन्द्रा० यदीष्वेति मन्त्रेणावाह्य सम्पूजयेत् ताङ्कन्याम् देवेन्द्राणिनमस्तुभ्यन्देवेन्द्रप्रियभामिनि विवाहम्भाग्यमारोग्यम्पुत्रलाभञ्च देहि मे १ धान्यन्देहि धनन्देहि पशून्देहीन्द्रभामिनि यशो देहि सुखन्देहि सर्वकार्यकरी भव २ इति प्रार्थयेत् ततः

पतिपुत्रवतीभिर्नीराजनङ्कार्यम् ॥ ताम्बूलदक्षिणाभिस्सन्तोषिताविप्राः श्री-
श्चते लक्ष्मीश्चेत्याद्याशिषो मनोजूतिरित्याद्याश्च पठेयुः । इति वाक्दानम् ।
तदनन्तरं विवाहात्प्राक् दशमदिनमारभ्य नवमषष्ठतृतीयदिवसवर्जिते वि-
वाहोक्ते नक्षत्रादौ गणपत्यादिपूजनपूर्वकम् अस्या कन्यायास्तैलहरिद्रारो-
पणमण्डपवेदिनिर्माणमहङ्करिष्ये इति सङ्कल्प्य कन्यापित्रादिना कार्यम्
अस्य वरस्य तैलहरिद्रारोपणादि करिष्ये इति वरपित्रादिना ततो वशि-
ष्ठेनोक्तम् षोडशारत्निकङ् कुर्याच्चतुर्द्वारोपशोभितम् मण्डपन्तोरणैर्युक्तन्तत्र
वेदीम्प्रकल्पयेत् अष्टहस्तन्तु रचयेन्मण्डपं वा द्विषट्करम् । नारदः हस्तो-

च्छ्रिताञ्चतुर्हस्तैश्चतुरस्त्रां समन्ततः स्तम्भैश्चतुर्भिस्सुश्लक्ष्णैर्वामभागे स्वसद्मनः १ समण्डपाञ्चतुर्दिक्षु सोपानैरतिशोभिताम्। प्रागुदक् प्रवणां रम्भास्तम्भहंस-शुकादिभिः २ विचित्रिताञ्चित्रकुम्भैर्विविधैस्तोरणाङ्कुरैः। भृङ्गारपुष्पनिकरै-र्वर्णकैस्समलङ्कृताम् ३ विप्राशीर्वचनैः पुण्यस्त्रीभिर्द्दीपैर्मनोरमाम्। वादित्र-नृत्यगीताद्यैर्हृदयानन्दिनीं शुभाम्। एवम्विधामारुरुक्षेन्मिथुनं साग्निवेदि-काम्। एवं यथाशक्ति शोभितम्मण्डपम्वेदिकाञ्च विधाय कन्यापिता वि-वाहात्पूर्वदिने सपत्नीकः कृतमङ्गलवेषभूषितो मण्डपे शुभासने प्राङ्मुख उपविश्य स्वदक्षिणे पत्नी तद्दक्षिणे कन्याञ्चोपवेश्याचम्य प्राणायामत्रयान्ते

ॐ श्रीमन्महागणपतये नमः श्रीलक्ष्मीनारायणाभ्यान्नम इत्यादि देशकालकीर्तनान्ते अस्याः मम कन्याया अमुकनाम्न्याः श्वः करिष्यमाणविवाहाङ्गभूतं स्वस्तिवाचनपूर्वकमविघ्नपूजनम्मण्डपदेवतापू० मातृकापू० वसोर्द्धारापू० आयुष्यमन्त्रजपन्नान्दीश्राद्धञ्चाहङ्करिष्ये इति सङ्कल्प्य तानि क्रमेण कुर्यात् एवं वरपिताऽपि गणपत्यादिस्मरणपूर्वकम्प्राणायामादिदेशकालकीर्तनान्ते अस्य मम पुत्रस्यामुकशर्मणः श्वो विवाहङ्करिष्ये तदङ्गभूतं स्वस्तिवाचनपूर्वकमित्यादि सङ्कल्प्य तानि कुर्यात् ग्रामान्तरे वधूश्चेत् तत्र गत्वैतत्कार्यम् । ततो वरः कृतकौतुकमङ्गलचारुभूषणवेषो यथा विभवमश्वादियानेन

श्रुतिवाद्यैर्घोषैर्वधूगृहमागच्छेत् तद्गृहद्वारि यथाचारम्पतिपुत्रवतीभिर्वधू-
मात्रा च नीराजनाक्षतारोपणादिभिस्संस्कृतोऽन्तः प्रविश्य भद्रासने सुव-
स्त्रास्तीर्णे प्राङ्मुख उपविशेत् कन्यापिता तत्पुरतस्तद्दक्षिणतस्तत्पत्नीचो-
पविशति अन्ये तत्पुरुषाः पञ्चविंशतिकुशमयौ प्रादेशमात्रौ त्रिवृतौ द्वौ
कुशविष्टरौ विमलदूर्वाक्षतयुतमर्घपात्रं सुखोष्णाङ्घ्रिप्रक्षालनजलमाचम-
नार्थम् शीतलञ्जलम्मधुपर्कन्दधिमधुघृतमपिहितङ् कांस्येकांस्येन वस्त्र-
द्वयम् यज्ञोपवीतञ्चन्दनम्पुष्पाणि अलङ्करणानि एतान्याहरन्ति अथ
कन्यापिता आचमनप्राणायामत्रयदेशकालकीर्तनान्ते अस्या अमुकनाम्न्याः

कन्याया अद्यविवाहङ्करिष्ये तत्र गृहागताय स्नातकाय वराय कन्यादा-
नाङ्गभूतम्मधुपर्कङ्करिष्य इति सङ्कल्पयेत् तत्र वरेण यन्मधुन इति मधुप-
र्कप्राशनम्। भक्षितशेषस्य प्रागसञ्चरे निनयनम्। इति वैकल्पिकावधार-
णङ्कर्त्तव्यम् ॥ अथर्ष्यादि च स्मर्तव्यम् वर्ष्मोऽस्मीति मन्त्रस्याथर्वणऋषिः अ-
नुष्टुप्० विष्टरो दे० विष्टरोपवेशने वि० १ विराजोदोहोऽसीत्यस्य प्रजा० यजुः०
आपो दे० पादप्रक्षालने विनियोगः २ आपःस्थ इत्यस्य प्रजा० यजुः आपो
देव० अर्घग्रहणे वि० ३ समुद्रम्व इत्यस्य आथर्वणऋ० अनुष्टुप्० आपो०
अभिनन्त्रणे वि० ४ आमागन्नित्यस्य परमे० बृहती० आपो दे० आचमने

वि० ५ मित्रस्यत्वेत्यस्य बृहस्पति० यजु० मधुपर्कौ दे० मधुपर्कावेक्षणे वि० ६ देवस्यत्वेत्यस्य प्रजा० गायत्री० सविता० मधुपर्कग्रहणे विनि० ७ नमश्श्यावास्येत्यस्य प्रजा० यजु० सविता० मधुपर्कलोडने वि० ८ यन्मधुन इत्यस्य कुत्सऋषिः जगती० मधुपर्कौ दे० मधुपर्कप्राशने विनि० ९ परिधास्या इत्यस्य आलम्बायन० पङ्क्तिः० वासो देवता वस्त्रपरिधाने वि० १० यज्ञोपवीतमित्यस्य परमेष्ठीऋषिः त्रिष्टुप्छं० लिङ्गोक्तादे० यज्ञोपवीतधारणे वि० ११ यशसामेत्यस्याथर्वणऋ० पङ्क्तिः० लिङ्गोक्तादे० उत्तरीयपरिधाने० १२ सुचक्षा अहमित्यस्य प्रजा० यजुः० आशीर्दे० जपे वि० १३ या आहरदित्यस्य भरद्वा०

अनुष्टु० सुमनसो दे० पुष्पग्रहणे विनियो० १४ यद्यश इत्यस्य विश्वामित्र० त्रिष्टुप्० सुमनसो दे० पुष्पधारणे विनियो० १५ अलङ्करणमित्यस्य भरद्वाज० उष्णिक्० अलङ्करणन्दैवतं अलङ्करणधारणे विनि० १६ इत्यृष्यादि स्मृत्वा ततो वधूपिता आसनस्य पश्चादवस्थितम्वरम्प्रति साधुभवानास्तामर्च-यिष्यामो भवन्तमित्याह वरः ॐअर्चय इति प्रत्याह ततोऽन्यः कश्चित् विष्टरो विष्टरो विष्टर इति प्राह कन्यापित्रा तिष्ठता प्रतिगृह्यतामिति निवेदितम् विष्टरन्तूष्णीम्वरः प्रतिगृह्य आसन उदगग्रन्निधाय वर्ष्मोऽस्मि स-मानानामुद्यतामिवसूर्य्यः इमन्तमभितिष्ठामि योमाकश्चाभिदासति इत्येनम-

भ्युपविशति एवमन्यः पादार्थमुदकम्पादार्थमुदकम्पादार्थमुदकमिति प्राह कन्यापित्रा प्रतिगृह्यतामिति निवेदितं वरः प्रतिगृह्य विराजोदोहोऽसि विराजोदोहमशीय मयि पाद्यायै विराजोदोह इति दक्षिणम्पादम्प्रक्षाल्यानेनैव मन्त्रेण सव्यम्प्रक्षालयति ब्राह्मणश्चेत्। क्षत्रियवैश्यौ तु सव्यम्पादम्प्रक्षाल्य दक्षिणम्प्रक्षालयतः। अथान्यो विष्टर इति त्रिःप्राह कन्यापित्रा प्रतिगृह्यतामिति निवेदितं द्वितीयविष्टरम्वरः प्रतिगृह्यासनाधस्तादुदगग्रम्भूमौ निधाय वर्ष्मोऽस्मीति मन्त्रेण तस्योपरि पादौ निदधाति अन्यः अर्घोऽर्घोऽर्घः दात्रा प्रतिगृह्यतामिति निवेदितमर्घं वरः आपः स्थ युष्माभिः सर्वान् कामान-

वाप्नवानीति प्रतिगृह्णाति । तम्मूर्द्ध्नोऽभिवन्द्य प्रागुदग्वा निनयन्नभिमन्त्रयते
समुद्रम्वः प्रहिणोमि स्वां योनिमभिगच्छत अरिष्टाऽस्माकं वीरामापरासे-
चिमत्पय इति अन्य आचमनीयमाचमनीयमाचनीयमिति प्राह दात्रा
प्रतिगृह्यतामिति निवेदितं वरस्तूष्णीम्प्रतिगृह्य आमागन्यशसा सꣳसृज
वर्चसा तम्माकुरु प्रियम्प्रजानामधिपतिम्पशूनामरिष्टिन्तनूनामित्याचामति
अन्यः मधुपर्क्को मधुपर्क्को मधुपर्क्कः दात्रा प्रतिगृह्यतामिति निवेदितं मधु-
पर्क्ङ्किङ्गिदुद्घाटितन्दातृहस्तस्थं वरः मित्रस्य त्वा चक्षुषा प्रतीक्षे इति
प्रतीक्षते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यामिति प्रति-

गृह्णाति सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया नमश्शुश्यावास्यायान्नशने यत्तआविद्धन्तत्ते निष्कृन्तामि इति प्रदक्षिणम्प्रयौति अनामिकाङ्गुष्ठाभ्यां त्रिर्निरुक्षयति प्रागुदग्वा एवमपरस्वारद्वयन्निरुक्षणञ्च प्रतिप्रयवणम्मन्त्राभ्यासः पात्रं भूमौ निधाय तस्यानामिकाङ्गुष्ठाभ्यामेव यन्मधुनोमधव्यम्परमꣳरूपमन्नाद्यम् । तेनाहम्मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमोमधव्योऽन्नादोऽसानीति मन्त्रावृत्त्या त्रिः प्राश्नाति शेषम्प्रागसञ्चरे निनयेत् द्विराचम्य प्राणान्सम्मृशति जलेन सम्मृशति यथा मन्त्रलिङ्गम् । वाङ्म आस्येऽस्तु इति मुखम् ॥ नसोर्मे प्राणोऽस्तु इति नासिकाद्वयम् ॥ अक्ष्णोर्मे चक्षु-

रस्तु इत्यक्षिद्वयम् ॥ कर्णयोर्मे श्रोत्रमस्तु इति दक्षिणकर्णमनेनैव वामक-
र्णम् । बाह्वोर्मे बलमस्तु इति दक्षिणबाहुमनेनैव वामम् । ऊर्वोर्मे ओजोऽस्तु
इति दक्षिणोरुमनेनैव वामम् । अरिष्टानि मेऽङ्गानि तनूस्तन्वामे सह सन्तु
इति सर्वाङ्गानि संस्पृशेत् । अत्राचान्तोदकायेति सूत्रात्पुनराचमनङ्केचिदि-
च्छन्ति ततः कन्यापित्रा दत्तम्वासो वरः परिधास्यै यशोधास्यै दीर्घायुत्वाय
जरदष्टिरस्मि शतञ्च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्य इति
परिधत्ते ततस्तद्दत्तं यज्ञोपवीतम् ॥ यज्ञोपवीतम्परमम्पवित्रं० मस्तुतेज इति
परिधत्ते तथा तद्दत्तमुत्तरीयं यशसामाद्यावापृथिवी यशसेन्द्राबृहस्पती

यशो भगश्च माविदद्यशो माप्रतिपद्यतामिति धारयति द्विराचामति च
कन्यापित्रा दत्तञ्चन्दनम्भालेऽनुलिप्य पश्चात् सुचक्षा अहमक्षीभ्याम्भूयासꣳ
सुवर्चामुखेन सुश्रुत्कर्णाभ्याम्भूयासमिति जपति कन्यापित्रा निवेदितानि
पुष्पाणि वरः याश्राहरज्जमदग्निश्श्रद्धायै कामायेन्द्रियाय ता अहं प्रति-
गृह्णामि यशसा च भगेन च इति प्रतिगृह्णाति यद्यशोऽप्सरसामिन्द्रश्चकार
विपुलम्पृथु तेन सङ्ग्रथिताः सुमनसश्राबध्नामि यशो मयि इति बध्नीते
कन्यापित्रा दत्तङ्कुण्डलाद्यलङ्करणम्वरः अलङ्करणमसि भूयोऽलङ्करणम्भूया-
दिति धारयति ततो वरो वेद्याम्परिसमूहनादिसँस्कारपूर्वकं लौकिकाग्निं

संस्थाप्याचम्य प्राणानायम्य देशकालकीर्तनान्ते अस्मिन्पुण्याहे धर्मार्थ-
कामप्रजासिद्ध्यर्थन्दारपरिग्रहणमहङ्करिष्ये इति सङ्कल्प्य लौकिकाग्नेस्स्था-
पनम् गौरीपरिणयनम् कुमार्या वस्त्रपरिधानादि गृहमध्ये अग्नेरुत्तरतः
कुम्भधृक् तेजन्यान्दक्षिणपादेन परिवर्त्तनम् पूर्वेण ब्रह्मणो गमनम् अपरेण
पात्रासादनम् द्वे पवित्रे ताम्रमय्याज्यस्थाली पालाशयस्समिधः प्राज्ञावा-
घारौ विदिशावाज्यभागौ वरोदक्षिणा राष्ट्रभृद्धोमः जयाहोमः अभ्यातान-
होमः सुगन्नुपन्यामित्याहुत्यन्ते परम्मृत्य इत्याहुतिः बध्वा आनडुहचर्मोप-
वेशनम्प्राच्याम् त्रिरात्रम्ब्रह्मचर्यम् एतान्वैकल्पिकपदार्थानहङ्करिष्ये अथ-

र्ष्यादि जराङ्गच्छेत्यस्य प्रजापतिर्ऋषिः त्रिष्टुप् छन्दः वासो देवता कन्याव-
स्त्रपरिधाने विनियोगः १ याअकृन्तन्नित्यस्य प्रजापतिर्ऋषिः गायत्री० वासो०
उत्तरीयपरिधाने विनि० २ समञ्जन्त्वित्यस्य आथर्वणऋ० अनुष्टुप्छन्दः लि-
ङ्गोक्ता० समञ्जने वि० ३ यदैषीत्यस्य आथर्व० अनु० लिङ्गो० निष्क्रमणे वि-
नि० ४ अघोरचक्षुरित्यादिचतुर्णाम्प्रजा० आद्यन्तयोस्त्रिष्टुप् मध्यमयोरनुष्टुप्०
कुमारीदेवता० परस्परावेक्षणे विनि० ५ भूर्भुवः स्वरिति महाव्याहृतीनां
प्रजा० क्रमेण गायत्र्युष्णिगनुष्टुप्छन्दांसि० अग्निवायुसूर्यादेवता होमे वि०
त्वन्नोअग्ने सत्वन्नोअग्ने अयाश्चाग्ने येतेशतमिति मन्त्राणाम्वामदेव-

ऋषिः त्रिष्टुपछन्दः अग्नीवरुणौ देवते प्रथमयोः तृतीयस्याग्निर्दैवता चतुर्थस्य वरुणस्सविताविष्णुर्विश्वेदेवामरुतस्स्वर्क्कादेवताः उदुत्तममित्यस्य शुनश्शेपऋ० त्रिष्टु० वरुणो देवता सर्वेषां होमे वि० राष्ट्रभृद्द्वादशानाम्मन्त्राणाम्प्रजा० सर्वाणियजूंषि० लिङ्गोक्ता० होमे वि० जयात्रयोदशमन्त्राणाम्परमेष्ठि० उक्ताछं० अन्त्यस्य त्रिष्टु० लिङ्गोक्ता० होमे वि० अभ्यातानानान्द्वाविंशतिमन्त्राणाम्प्रजा० त्रिष्टुप्० लिङ्गोक्ता० होमे वि० परमृत्य इति मन्त्रस्य सङ्कुसुकऋ० त्रिष्टुप्० मृत्युर्दैवता होमे वि० अर्यमणमित्यादित्रयाणाङ्कुमारीमन्त्राणामाथर्वणऋ० अनुष्टुपछन्दः अग्निर्दैवता लाजाहोमे वि०

गृभ्णामि त इत्यादिचतुर्णाङ्क्रमेण याज्ञवल्क्यभारद्वाजाथर्वणप्रजापतिऋ-
षयः त्रिष्टुबुष्णिगनुष्टुप्छन्दोहीनानि भगाद्यादेवताः पाणिग्रहणे विनियोगः
आरोहेममित्यस्याथर्वणऋषिः अनुष्टुप्० वधूर्देवता दृषदारोहणे वि० सरस्वति
प्रेदमित्यस्य विश्वावसुऋ० अनुष्टुप्० सरस्वतीदेव० गाथागाने वि० तुभ्यम-
ग्रेइत्यस्याथर्व० अनु० अग्निदे० परिक्रमणे वि० आपःशिवा इत्यस्य प्रजा०
यजुः लिङ्गो० मूर्द्धाभिषेके विनियोगः आपोहिष्ठेति तिसृणां सिन्धुद्वीपऋ०
गायत्री० आपोदे० अभिषे० तच्चक्षुरित्यस्य दध्यङ्ङाथर्वणऋ० पुर उष्णिक्०
सूर्यो दे० सूर्यावेक्षणे वि० मम व्रत इत्यस्य प्रजा० त्रिष्टु० प्रजापतिदे० हृद-

यालम्भने वि० सुमङ्गलीरित्यस्य प्रजा० अनु० लिङ्गोक्ता० अभिमन्त्रणे वि० इहगाव इत्यस्य प्रजा० अनु० लिङ्गोक्ता० उपवेशने वि० ध्रुवमसीत्यस्य प्रजा० पङ्क्तिः० लिं० ध्रुवावेक्षणे वि० इत्यृष्यादि स्मृत्वा ततो वरो दैवज्ञं सम्पूज्य तद्दत्ताक्षतफलाञ्जलिर्वादित्रश्रुतिमन्त्रघोषैरन्तः प्रविश्योभयत्र स्वस्तिकाङ्कितोदक्दशाधृतपटाद्बहिर्भागे प्रत्यङ्मुखो लक्ष्मीनारायणञ्चिन्तयन् तिष्ठन् एवङ्कन्याऽपि सुस्नाता परिहिताहतवस्त्रा सूत्रवेष्टितोपलदृषदोपरि हरिद्रानिर्मितगौरीहरौ सम्पूज्य इन्द्राणीञ्चाक्षतपुञ्जेषु सम्पूज्य देवीन्द्राणि नमस्तुभ्यन्देवेन्द्रप्रियभामिनि विवाहम्भाग्यमारोग्यम्पुत्रलाभञ्च देहि मे धा-

न्यन्देहि धनन्देहि पशून्देहीन्द्रभामिनि यशो देहि सुखन्देहि सर्वकार्यकरी
भवेति सम्प्रार्थ्य साक्षतफलहस्ता पटान्तर्भागे प्राङ्मुखी तिष्ठन्ती दैवज्ञ-
पठितमङ्गलपद्यपठनान्ते तदेवलग्नान्ते च ॐ प्रतिष्ठेत्युक्ते उत्तरतः पटे-
ऽपसारितेऽन्योन्यमस्तकोपर्यञ्जलिस्थाक्षताः प्रक्षेप्तव्याः वरः अथैनाम्वासः
जराङ्गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा शतञ्जीवशारदः
सुवर्चा रयिञ्च पुत्राननु संव्ययस्वायुष्मतीदम्परिधत्स्ववास इति परिधाप-
यति अथोत्तरीयम् या अकृन्तन्नवयं या अतन्वत याश्चदेवीस्तन्तूनभितोत-
तन्थ तास्त्वादेवीर्जरसेसंव्ययस्वायुष्मतीदम्परिधत्स्ववास इति परिधापयति

कन्यापिता परस्परंसमञ्जेथामित्यध्येषयति ततो वरेण समञ्जन्तु विश्वेदेवाः समापो हृदयानिनौ सम्मातरिश्वासन्धातासमुदेष्ट्रीदधातुनौ इति पठितेन वधूवरौ समञ्ज्च्छतः गत्वा च प्राङ्मुखोवरः प्रत्यङ्मुखीकन्या चोपविशति अथ कन्यापिता तद्दक्षिणतः स्वदक्षिणतः पत्न्यासहोदङ्मुखोपविष्टः शुचिराचान्तः पवित्रपाणिः कृतप्राणायामत्रयः अद्येत्यादि देशकालकीर्त्त-नान्ते मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादि कन्यादान-कल्पोक्तफलावाप्तये अनेन वरेण अस्याङ्कन्यायामुत्पादयिष्यमाणसन्तत्या द्वादशावरान्द्वादशपरान्पुरुषाँश्च पवित्रीकर्त्तुमात्मनश्च श्रीलक्ष्मीनारायण-

प्रीतये ब्राह्म्यविवाहविधिना कन्यादानमहङ्करिष्ये इति साक्षतकुशजलेन सङ्कल्प्य वधूवरपुरतो नूतनकाँस्यपात्रन्निधाय वध्वञ्जल्युपरि वराञ्जलौ शिवाश्चापस्सन्तु इति जलन्दत्वा सौमनस्यमस्तु इति पुष्पाणि अक्षतञ्चारिष्टञ्चास्तु इति यवान् यच्छ्रेयस्तदस्तु यत्पापन्तत्प्रतिहतमस्तु दीर्घमायुश्शान्तिः पुष्टिस्तुष्टिश्चास्तु इति कुशाक्षतजलन्दत्वा उपमन्युगोत्रस्य उपमन्युवासिष्ठाभरद्वस्वैन्द्रप्रमदेति त्रिप्रवरस्य विश्वनाथशर्मणः प्रपौत्राय कोनेरशर्मणः पौत्राय नरहरिशर्मणः पुत्राय उपमन्युगोत्राय उपमन्युवासिष्ठाभरद्वस्वैन्द्रप्रमदेति त्रिप्रवराय यजुर्वेदान्तर्गतवाजसनेयशाखाध्यायिने हरदत्तशर्मणे

ब्राह्मणाय वराय कन्यार्थिने काश्यपगोत्रस्य काश्यपावत्सारनैध्रुवेतित्रिप्र-
वरस्य मुद्गलशर्मणः प्रपौत्रीं शामशर्मणः पौत्रीं गदाधरशर्मणः पुत्रीं का-
श्यपगोत्रां काश्यपावत्सारनैध्रुवेतित्रिप्रवरां वेणीनाम्नीं गौरीमिमाङ्कन्यां
यथाशक्त्यलङ्कृताम्प्रजापतिदैवतां शतगुणीकृतज्योतिष्टोमातिरात्रशतफ-
लकामः दशसहस्रधूर्यवाजिसुपात्रार्पणफलकामो वा भार्यात्वाय तुभ्यमहं
सम्प्रददे इत्युक्त्वा अविच्छिन्नभार्यापातितजलधारया सकुशाक्षततुलसीपत्र-
कन्यादक्षिणहस्तम्वरदक्षिणहस्ते विश्वेश्वरञ्चिन्तयन् विश्वेश्वरः प्रीयतामिति
दद्यात् वरः स्वस्तीति ब्रूयात् कन्यादक्षांसं स्पृशन् द्यौस्त्वा ददातु पृथ्वी त्वा

प्रतिगृह्णातु इतिमन्त्रेण प्रतिगृह्णीयात् कन्यापिता यस्त्वया धर्मश्चरितव्यस्सो ऽनया सह धर्मेचार्थेच कामेच त्वयेयन्नातिचरितव्येतिवरम्ब्रूयात् वरः नाति- चरामीत्युक्त्वा कोऽदात्कस्मा ऽअदात्का ऽमैतत्ते इति कामस्तुतिम्पठेत् एवमेव पुनर्वारद्वयङ्गोत्रोच्चारणादिकामस्तुत्यन्तङ्कर्तव्यमिति सम्प्रदायः ततः कन्या- पिता कृतैतत्कन्यादानप्रतिष्ठासिद्ध्यर्थं सुवर्णङ्गोमिथुनञ्च तुभ्यमहं सम्प्रददे इति दक्षिणान्दत्वा नममेति वदेत् तथा यथाविभवम्महिष्यश्वदास्युपकरणं सङ्कल्पपूर्वकन्दद्यात् तत्र यज्ञसाधनभूतायाविश्वस्याघप्रणाशिनी विश्वरू- पधरो देवः प्रीयतामनया गवेति गोदानमन्त्रः ततः पुरोहितादिर्द्विगुणित-

शुक्लसूत्रेण दुग्धाक्तेन दम्पती कन्यादत्तांसमीशानमारभ्य कण्ठदेशे कटिदेशे चतुर्वारम्पञ्चवारम्वा परित्वागिर्वणोगिरइमा० जुष्टय इति मन्त्रेण वेष्टयेत् अत्र वैदिकाः सयः कामयेतेत्यादि पठन्ति तदत्यन्तमनुचितम् तस्य वृहदा-रण्यगतत्वेनारण्येनूचमानत्वात् गृहेमङ्गलमध्ये रात्र्यादावशुचिभिः पठन-निषेधात् श्रुतिवाक्यादिप्रमाणैरविनियुक्तत्वात् प्रयोगप्राशुभावपिघाताच्च अन्यदविरुद्धम्वृद्धसम्मतङ्कर्त्तव्यम् । यथाऽत्रमिलितादम्पत्योस्सुलग्नमस्तु दम्पत्योरविच्छिन्ना प्रीतिरस्त्वित्याशीर्वचनेन शिरस्यक्षतनिक्षेपणपूर्वकम्पु-रस्स्थापितकाँस्यपात्रे दक्षिणादानम् ततः कण्ठस्थसूत्रमधो निष्काश्य कुङ्कु-

माक्ते तस्मिन्नूर्णासूत्रं हरिद्राखण्डञ्च बध्वा वधूवामप्रकोष्ठे वरो यदाब-
ध्नन्दाक्षा० यथासमिति मन्त्रेण बध्नीयात् कटिदेशस्थसूत्रमूर्द्ध्वन्निष्काश्य
तथैव वरदक्षिणप्रकोष्ठे वधूर्बध्नीयात् वरस्तु प्रोतसूक्ष्मकाचमणिसूत्रम्वधू-
कण्ठे । माङ्गल्यतन्तुनाऽनेन भर्तृजीवनहेतवे कण्ठे बध्नामि सुभगे सञ्जीव
शरदःशतमिति बध्नाति वधूवरौ गौरीहराविन्द्राणीञ्च नमस्कुर्वीताम् वधू-
स्तत्र लिखिताम्रवृक्षस्य दुग्धेन सेचनङ् कुर्यात् वरः एवम्पित्रा प्रत्तामादाय
वामहस्ते गृहीत्वा यदैषिमनसा दूरन्दिशोनुपवमानोवा हिरण्यपर्णोवैकर्ण-
स्सत्वामन्मनसाङ्करोतु वेणीनाम्नीं इति वधूनामग्रहणान्तमन्त्रेण गृहान्निष्का-

मति ताभ्यां सहान्यो द्विजः प्रशस्तताम्रादिपल्लवदूर्वाङ्कुरउदकुम्भं स्क-
न्धे कृत्वा निष्क्रम्योत्तरतोऽग्नेर्वाग्यतः स्थितो भवत्यभिषेचनपर्यन्तम् ततो
वेदीसमीपमागतौ वधूवरौ प्रति कन्यापिता परस्परं समीक्षेथामित्यध्येष-
यति तौच वरपठितैः अघोरचक्षुरपतिघ्न्येधि शिवापशुभ्यः सुमनाः सुवर्चाः
वीरसूर्देवकामास्योनाशन्नो भवद्विपदे शञ्चतुष्पदे १ सोमः प्रथमो विविदे
गन्धर्वो विविद उत्तरः तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः २ सोमोऽद-
दद्गन्धर्वाय गन्धर्वोऽददद्ग्नये रयिञ्च पुत्राँश्चादादग्निर्मह्यामथो इमाम् ३ सा-
नः पूषाशिवतमा मेरयसानऊरू उशती विहर यस्यामुशान्तः प्रहराम शेपं

यस्यामुकामाबहवो निविष्ट्यै ४ इति मन्त्रैस्समीक्षतःपरस्परम् ततो वरो दक्षिणपादेन वधूर्वामपादेन वेदीमारुह्य प्रदक्षिणमग्निम्पर्याणीय पश्चादग्नेस्तेजनीन्नामतृणपूलीन्दक्षिणपादेन परिवृत्यैकस्मिन् कुशास्तृते आसन उपविशति वरः। तद्दक्षिणतो वधूः वरस्तु विवाहाङ्गहोमङ्करिष्ये तत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम् सवितारम् विष्णुम् विश्वान्देवान्मरुतस्स्वर्कान् वरुणम् ऋतासाहम् ऋतधामानम् अग्निम् गन्धर्वम् ओषधीः अप्सरसः मुदः सꣳहितम् विश्वसामानम् सूर्यम् गन्धर्वम् मरीचीः अप्सरसः आयुवः

सुषुम्णाम् सूर्यरश्मिमम् चन्द्रमसम् गन्धर्वम् नक्षत्राणि अप्सरसः भेकुरीः इषिरम् विश्वव्यचसम् वातम् गन्धर्वम् अपः अप्सरसः ऊर्ज्जः भुज्युम् सुपर्णम् यज्ञम् गन्धर्वम् दक्षिणाः अप्सरसः तावाः प्रजापतिम् विश्वकर्माणम् मनः गन्धर्वम् ऋक्सामानि अप्सरसः एष्टीः चित्तम् चित्तिम् आकूतम् आकूतिम् विज्ञातम् विज्ञातिम् मनः शाक्करीः दर्शम् पौर्णमासम् बृहतम् रथन्तरम् प्रजापतिम् अग्निम्भूतानामधिपतिम् इन्द्रम् ज्येष्ठानामधिपतिम् यमम् पृथिव्या अधिपतिम् वायुमन्तरिक्षस्याधिपतिम् सूर्यन्दिवोऽधिपतिम् चन्द्रमसन्नक्षत्राणामधिपतिम् बृहस्पतिम्ब्रह्मणोऽधिपतिम् मित्रं सत्यानामधिपतिम् वरु-

णामपामधिपतिम् समुद्रम् स्रोत्यानामधिपतिम् अन्नꣳसाम्राज्यानामधिप-
तिम् सोममोषधीनामधिपतिम् सवितारम्प्रसवानामधिपतिम् रुद्रम्पशूना-
मधिपतिम् त्वष्टारं रूपाणामधिपतिम् विष्णुम्पर्वतानामधिपतिम् मरुतो-
गणानामधिपतीन् पितॄन्पितामहान् परान् अवरान् ततान् ततामहान्
अग्निम् अग्निम् अग्निम् वैवस्वतम् मृत्युम् एतादेवता आज्येन त्रिरग्निम्
सकृत् भगम् लाजैः प्रजापतिम् अग्निम् स्विष्टकृतञ्आज्येन एतादेवता अङ्ग-
प्रधानार्थां अस्मिन् विवाहहोमेऽहं यक्ष्ये अस्मिन् विवाहहोमे ब्रह्माभवेति
ब्रह्मवरणादिप्रकृतचरुरहितब्रह्मवरान्तपात्रासादनान्ते कुमारीभ्राता शूर्पे

शमीपर्णमिश्राँल्लाजान् दृषदं रोहितमानडुहञ्चर्म आचार्याय वरञ्चैतान्युप-
कल्प्य पवित्रकरणादिपर्युक्षणान्ते आज्येन ब्रह्मणाऽन्वारब्धः ॐप्रजापतये
स्वाहा इदम्प्रजापतये नमम इन्द्राय स्वाहा इदमिन्द्राय नमम अग्नये०
इदमग्नये न० सोमाय० इदं सोमाय न० भूः स्वा० इदमग्नये न० भुवः
स्वाहा इदम्वायवे न० स्वः स्वाहा इदं सूर्याय न० त्वन्नोअग्ने वरुण०स्म-
त्स्वाहा इदमग्नीवरुणाभ्यान्न० सत्वन्नोअग्नेवमो० एधिस्वाहा इदमग्नीवरु-
णाभ्यान्न० अयाश्चाग्ने० स्वाहा इदमग्नये न० येतेशतं० स्वा० इदम्वरुणाय
सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यस्स्वर्केभ्यश्च न० उदुत्तमम्व० स्याम

स्वा० इदम्वरुणाय न० अतोऽनन्वारम्भः अथ द्वादशराष्ट्रभृद्धोमाः ऋताषा-
ड्ऋतधामाग्निर्गन्धर्वःसनइदम्ब्रह्मक्षत्रम्पातुतस्मै स्वाहा वाट् इदमृतासा-
हेऋतधाम्नेऽग्नये गन्धर्वाय नमम १ ऋताषाड्ऋतधामाग्निर्गन्धर्वस्तस्यौषध-
योऽप्सरसोमुदोनामताभ्यः स्वाहा इदमोषधीभ्योऽप्सरोभ्योमुद्भ्यो नमम २
सꣳहितोविश्वसामा सूर्योगन्धर्वःसनइदम्ब्रह्म० वाट् इदं सꣳहिताय विश्व-
साम्ने सूर्याय गन्धर्वाय न० ३ सꣳहितोविश्वसामासूर्योगन्धर्वस्तस्यमरीचयो-
ऽप्सरसऽआयुवोनामताभ्यस्वाहा इदम्मरीचिभ्योऽप्सरोभ्यऽआयुभ्यो न० ४
सुषुम्णस्सूर्यरश्मिश्चन्द्रमागन्धर्वस्सनइदं० वाट् इदं सुषुम्णाय सूर्यरश्मये

चन्द्रमसे गन्धर्वाय नमम ५ सुषुम्णाःसूर्यरश्मिश्चन्द्रमागन्धर्वस्तस्यनक्षत्राण्य-
प्सरसोभेकुरयोनामताभ्यस्वा० इदन्नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यो नमम ६
इषिरोव्विश्वव्यचावातोगन्धर्वस्सनइदं० व्वाट् इदमिषिराय विश्वव्यचसे वा-
ताय गन्धर्वाय न० ७ इषिरोविश्वव्यचावातोगन्धर्वस्तस्यापोअप्सरसऊर्जोना-
मताभ्यस्वाहा इदमद्भ्योऽप्सरोभ्यऊर्ग्भ्यो न० ८ भुज्युस्सुपर्णोयज्ञोगन्धर्वस्स-
न० व्वाट् इदम्भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय न० ९ भुज्युस्सुपर्णोयज्ञोग-
न्धर्वस्तस्य दक्षिणा अप्सरसस्तावानामताभ्यस्वाहा इदन्दक्षिणाभ्योऽप्सरो-
भ्यस्तावाभ्यो न० १० प्रजापतिर्विश्वकर्मामनोगन्धर्वस्सनइदं० व्वाट् इदम्प्रजा-

पतये विश्वकर्मणे मनसे गन्धर्वाय न० ११ प्रजापतिर्विश्वकर्मामनोगन्धर्वस्त-
स्यऋक्सामान्यप्सरसएष्टयोनामताभ्यस्स्वाहा इदमृक्सामभ्योऽप्सरोभ्य एष्टि-
भ्यो न० १२ इति राष्ट्रभृद्धोमः॥ अथ त्रयोदशजयाहोमाः चित्तञ्च स्वाहा इद-
ञ्चित्ताय नमम १ चित्तिश्च स्वाहा इदञ्चित्त्यै० २ आकूतञ्च स्वाहा इदमाकूताय०
३ आकूतिश्च स्वाहा० इदमाकूत्यै० ४ विज्ञातञ्च स्वा० इदम्विज्ञाताय० ५ विज्ञा-
तिश्च स्वा० इदम्विज्ञात्यै० ६ मनश्च स्वा० इदम्मनसे० ७ शक्करीश्च स्वाहा
इदं शक्करीभ्यो० ८ दर्शश्च स्वाहा इदन्दर्शाय० ९ पौर्णमासञ्च स्वा० इदम्पौ-
र्णमासाय० १० वृहच्च स्वा० इदम्बृहते० ११ रथन्तरञ्च स्वा० इदं रथन्तराय १२

प्रजापतिर्जयानिन्द्रायवृष्णेप्रायच्छदुग्रःपृतनाजयेषु तस्मैविशस्समनमन्तस-र्वाः स उग्रः सइ हव्यो वभूव स्वाहा इदम्प्रजापतये १३ इति जयाहोमाः ॥ अथ द्वाविंशत्यभ्यातानहोमाः अग्निर्भूतानामधिपतिस्समावत्वस्मिन्ब्र-ह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यान्देवहूत्याᳬं स्वा-हा इदमग्नये भूतानामधिपतये नमम १ इन्द्रोज्येष्ठानामधिपतिः स० इद-मिन्द्राय ज्येष्ठानामधिपतये० २ यमः पृथिव्याअधिपतिः स० इदं यमाय पृथिव्याअधिपतये० ३ वायुरन्तरिक्षस्याधि० इदम्वायवेऽन्तरिक्षस्याधिपतये० ४ सूर्योदिवोधिप० इदं सूर्याय दिवोऽधिपतये० ५ चन्द्रमानक्षत्राणाम० इद-

श्चन्द्रमसे नक्षत्राणामधिप० ६ बृहस्पतिर्ब्रह्मणोधिप० इदम्बृहस्पतये ब्रह्म-
णोऽधिप० ७ मित्रस्सत्यानामधि० इदम्मित्राय सत्यानामधिप० ८ वरुणो-
ऽपामधिपति० इदम्वरुणायापामधिप० ९ समुद्रः स्रोत्यानामधिप० इदं
समुद्राय स्रोत्यानामधि० १० अन्नꣳसाम्राज्यानामधिपतितन्मावत्वस्मिन्
ब्रह्म० इदमन्नाय साम्राज्यानामधिपत० ११ सोम ओषधीनामधिपतिस्स०
इदं सोमायौषधीनामधि० १२ सविताप्रसवानामधिपति० इदं सवित्रे प्रस-
वानामधि० १३ रुद्रः पशूनामधि० इदं रुद्राय पशूनामधिपत० १४ प्रणीतो-
दकोपस्पर्शः त्वष्टारूपाणामधि० इदं त्वष्ट्रे रूपाणामधिपत० १५ विष्णुःपर्व-

तानाम० इदम्बिष्णवे पर्वतानाम० १६ मरुतोगणानामधिपतयस्तेमावन्त्व-
स्मिन्ब्रह्म० इदम्मरुद्भ्यो गणानामधिपतिभ्यो० १७ पितरः पितामहाः परेऽ-
वरेततास्ततामहाः इहमावन्त्वस्मिन्ब्रह्म० इदं पितृभ्यः पितामहेभ्यः परे-
भ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यश्च न० प्रणीतोदकस्पर्शः १८ केचिदेतेषामष्टादशा-
नामेवाभ्यातानसञ्ज्ञामिच्छन्ति कारिकाकारस्तु द्वाविंशतिरभ्यातानाञ्जुहुयात्
तद् घृतेन ता इति वैवस्वतोनोत्रभयङ्कृणोतुस्वाहेत्यन्तानान्द्वाविंशतीना-
मप्यभ्यातानसञ्ज्ञामिच्छन्ति उभयमते ऋष्याद्येकमेवपूर्वोक्तम् अग्निरैतु प्रथ-
मोदेवतानांᳬसोऽस्यैप्रजाम्मुञ्चन्तुमृत्युपाशात् तदयᳬराजावरुणोऽनुमन्यतां

यथेयꣳस्त्रीपौत्रमघन्नरोदात्स्वाहा इदमग्नये० १९ इमामग्निस्त्रायताङ्गार्ह-
पत्यः प्रजामस्यैनयतुदीर्घमायुः अशून्योपस्थाजीवतामस्तुमातापौत्रमान-
न्दमभिविबुध्यतामियꣳस्वाहा इदमग्नये० २० स्वस्तिनोअग्नेदिवआपृथि-
व्याविश्वानिधेह्ययथायजत्र यदस्याम्महिदिविजातम्प्रशस्तन्तदस्मासुद्रवि-
णन्धेहिचित्रꣳस्वाहा इदमग्नये० २१ सुगन्नुपन्थाम्प्रदिशन्नएहिज्योतिष्म-
द्धेह्यजरन्नआयुः अपैतुमृत्युरमृतम्मआगाद्वैवस्वतोनोअभयङ्कृणोतुस्वाहा
इदम्वैवस्वताय० २२ इत्यभ्यातानहोमाः परम्मृत्योऽअनुपरेहिपन्थां यस्ते-
अन्यऽइतरोदेवयानात् चक्षुष्मतेशृण्वतेतेब्रवीमिमानः प्रजाꣳरीरिषोमोत-

वीरान्त्स्वाहा इदम्मृत्यवे० १ इदम्पितृभ्यो नमम इतिवा प्रणीतोद० अथ ला-
जाहोमः शूर्पस्थाँल्लाजान् चतुर्थांशेन कुमार्याभ्राता शमीपलाशमिश्राँल्ला-
जानञ्जलिनाञ्जलावावपति तान् संहतेन प्राङ्मुखी तिष्ठती भ्रात्रञ्जलि-
दत्तलाजागृहीताञ्जलिना स्वपठितैस्त्रिभिर्मन्त्रैस्तृतीयांशम्प्रतिमन्त्रन्देवती-
र्थेन वा प्राजापत्येन जुहोति अर्यमणान्देवङ्कन्याअग्निमयक्षत सनोअ-
र्यमादेवःप्रेतोमुञ्चतुमापते स्वाहा त्यागस्तु वरस्यैव इदमग्नये १ इदम-
र्यम्णो इति वासुदेवः इयन्नार्युपब्रूते लाजानावपन्तिका आयुष्मानस्तुमे
पतिरेधन्तान्ज्ञातयो मम स्वाहा इदमग्नये० २ इमाँल्लाजानावपाम्यग्नौस-

मृद्धिकरणन्तव ममतुभ्यचसम्बनननन्तदग्निरनुमन्यतामियꣳस्वाहा इदमग्नये नमम ३ अथ वरः अस्या उत्तानन्दक्षिणं हस्तंसाङ्गुष्ठङ्गृभ्णामि तेसौभगत्वाय हस्तम्मया पत्या जरदष्टिर्यथासः भगोअर्यमा सविता पुरन्धिर्मह्यन्त्वाऽदुर्गार्हपत्याय देवाः १ अमोऽहमस्मि सात्वꣳसात्वमस्यमोअहं सामाहमस्मिऋक्त्वन्द्यौरहम्पृथिवीत्वम् २ तावेहिविवहावहै सहरेतोदधावहै प्रजाम्प्रजनयावहै पुत्रान् विन्द्यावहै बहून् ३ तेसन्तुजरदष्टयः सम्प्रियौरोचिष्णूसुमनस्यमानौ पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम् ४ इति मन्त्रैर्गृह्णाति वरो वध्वा सहाग्नेरुत्तरतो गत्वा वध्वा द-

क्षिणाङ्गुरं स्ववामकरेणादाय स्वदक्षिणपाणिना वधूदक्षिणपादमादाय दृष-
दम् आरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव अभितिष्ठ पृतन्यतोऽवबाधस्व
पृतनायत इत्यनेन मन्त्रेणारोहयत्येनाम् अथ दृषदारूढायास्वरो गाथाङ्गा-
यति सरस्वति प्रेदमव सुभगे वाजिनीवति यान्त्वा विश्वस्य भूतस्य प्रजायाम-
स्याग्रतः यस्याम्भूतꣳसमभवद्यस्यां विश्वमिदञ्जगत् तामद्य गाथाङ्गास्यामि
या स्त्रीणामुत्तमं यशः इति वरः पुनर्दक्षिणकरेण तद्दक्षिणकरङ् गृहीत्वाऽग्नि-
म्प्रदक्षिणम् तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतुना सह पुनः पतिभ्यो जायान्दाग्ने
प्रजया सह १ इति मन्त्रेण वरपठितेन परिक्रामतः ब्रह्माग्न्योरन्तरेण स्व-

न्द्विरपरं लाजावपनादिपरिक्रमणान्तम्मन्त्रवत्कर्त्तव्यम् ततः कुमारीभ्राता शूर्पकुष्ठया सर्वाँल्लाजान् कुमार्यञ्जलावावपति सा तिष्ठत्येव भगाय स्वाहा इदम्भगाय० सर्वान्जुहोति ततस्समाचारात्तूष्णीं हस्तग्रहणारोहणपरिक्रमणानि ततो वरो ब्रह्मणाऽन्वारब्ध आज्येन प्रजापतये स्वाहा इदम्प्रजापतये० वरः अथैनामुदीचीꣳसप्तपदानि प्रक्रामयति यथाऽस्या वामपादेन दक्षिणम्पादन्नातिक्रामति यथा एकमिषेविष्णुस्त्वा नयतु इति वरेणोक्तस्य मन्त्रस्यान्ते वधूः प्रथमपादमुदक् दधाति १ द्वे ऊर्ज्जे विष्णु० इत्यस्यान्ते द्वितीयम् २ त्रीणि रायस्पोषाय वि० इत्यस्यान्ते तृतीयम् ३ चत्वारि मायो

भवाय वि० इतिचतुर्थम् ४ पञ्चपशुभ्यो वि० इति पञ्चमम् ५ षड्ऋतुभ्यो वि०
इति षष्ठम् ६ सखे सप्तपदाभव सामामनुव्रताभव वि० इत्यस्यान्तेसप्तमम्
७ अथ वरः निष्क्रमणप्रभृत्युदकुम्भठंस्कन्धेकृत्वावाग्यतः स्थितोभवत्युत्तरतो
वरः ततः प्रवालदूर्वाङ्कुरैरेनाम्वधूम्मूर्द्धनि आपश्शिवाश्शिवतमाश्शान्ता-
श्शान्ततमास्तास्ते कृणवन्तुभेषजमित्यभिषिञ्चति आपोहिष्ठेति च तिसृभि-
र्द्वितीयवारमभिषिञ्चति दिवाविवाहश्चेत् वरो वधूम् सूर्यमुदीक्षस्व इत्य-
ध्येषयति सा च तच्चक्षुर्देवहितं० शतात् इति मन्त्रेण स्वयम्पठितेन सूर्यमु-
दीक्षते अथ वरस्स्वदक्षिणकरम्वध्वा दक्षिणांसोपरितो नीत्वा मम व्रते ते

हृदयन्दधामि मम चित्तमनुचित्तन्ते अस्तु मम वाचमेकमनाजुषस्व प्रजा-
पतिष्ट्वानियुनक्तुमह्यम् इति मन्त्रेण हृदयमालभते अथैनाम् सुमङ्गलीरि-
यम्वधूरिमाꣳसमेतपश्यत सौभाग्यमस्यैदत्वायाथास्तम्विपरेतन इति मन्त्रे-
णाभिमन्त्रयते संहताभ्याम्पाणिभ्याम् अत्र पतिपुत्रान्विताभव्याश्चतस्रस्सु-
भगाःस्त्रियः वधूम्वरस्य वामभागे उपवेशयन्ति वरेण तस्यास्सीमन्ते सिन्दू-
रन्दापयन्ति तया सुवासिनीभ्यो गुडजीरकवायनदानङ्कारयन्ति तदुत्तरी-
यग्रन्थौ जीरकन्धान्यञ्च बध्वा श्रीगौरीसावित्रीसौभाग्यञ्जन्मनि तेऽस्तु इति
कर्णे कथयन्ति एतावत्समाचारप्राप्तङ्कारयितव्यम् तां वरउत्थाप्य प्राग्वोद-

ग्वाऽनुगुप्त आगारेआनुडुहे रोहिते चर्मणि इहगावोनिषीदन्त्विहाश्वा इहपू-
रुषाः इहोसहस्रदक्षिणोयज्ञइहपूषानिषीदन्तु इत्युपवेशयति तत आगत्या-
ग्नेः पश्चादुपविश्य वरो ब्रह्मान्वारब्धः अग्नयेस्विष्टकृते स्वाहा इदमग्नये
स्विष्टकृते नमम संस्रवप्राशनादिप्रणीताविमोकान्तेआचार्याय वरन्ददाति
गाम्ब्राह्मणश्चेद्वरः राजन्यश्चेद्ग्रामम् वैश्यश्चेदश्वम् अन्येभ्यो ब्राह्मणेभ्यो
यथाश्रद्धं सुवर्णरजतादिदक्षिणान्दातुमुत्सृजे इति सङ्कल्प्य दद्यात् कृतैत-
द्विवाहकर्मणोऽङ्गतया विहितं यथाशक्ति ब्राह्मणेभ्यो भोजनंसम्प्रदास्य इति
सङ्कल्प्य यथा काले ब्राह्मणान् भोजयेत् न्यूनन्तर्हिदद्य १० दिवाविवाहश्चे-

दस्तमिते रात्रौ चेत् ब्राह्मणतर्प्पणसङ्कल्पोत्तरम् वरः ध्रुवमीक्षस्व इति वधू-
म्प्रेषयति साच ध्रुवमसिध्रुवन्त्वापश्यामि ध्रुवैधिपोष्येमयिमह्यन्त्वादात्
बृहस्पतिर्मयापत्याप्रजावतीसञ्जीवशरदश्शतम् इति वरपठिते मन्त्रान्ते ध्रु-
वमीक्षते सायदि न पश्येत्पश्यामीत्येवब्रूयात् त्रिरात्रमक्षारालवणाशिनौ
स्यातामधश्शायीयातामिथुनञ्च नोपेयाताम्। एकपात्रे सहाश्नीत केचित्तत्र-
थमेऽहनि। पयोवर्ज्यंहविष्यान्नमित्यवोचत्त्रिविक्रमः १ अजस्रमग्निधारणम्भ-
वेद्विवाहहोमतः। ततोऽग्निना सहव्रजेत्प्रयाणकालतो वरः २ कथञ्चिद-
ग्निनाशनम्भवेत्स्वयोनिनिर्हृतिः। ततोग्न्यनुगमननिमित्तमनादिष्टहोमस्प्रा-

यस्मिन्तत्करिष्ये इति सङ्कल्प्य पूर्वोक्तमनादिष्टहोमङ्कुर्यात् इति विवाहः ॥ अथ विवाहदिनाच्चतुर्थरात्रौ तत्र भद्रासत्वे दिन एव शिष्टाचारप्राप्त-स्वरमात्रे वरपक्षे सभार्यैच वंशपात्रदानङ्कर्त्तव्यङ्कन्यापित्रा । सवस्त्रफलताम्बूलन्दम्पत्योः प्रीतिवर्द्धनम् । सेरिकयाख्यं वंशपात्रम्पक्वान्नैः परिपूरितम् ॥ करकैस्तद्रसङ्ख्याकैस्सुवर्णपरिपूरितैः । एतावद्दैरिणीरूपङ्कर्त्तव्याङ्किलसूरिभिः । एवं सम्पाद्य कन्यापिता सभार्यः देशकालौ सङ्कीर्त्य कृतविवाहफलप्रतिष्ठार्थं वधूवरयोर्वरपित्रादीनाम्वस्त्रसमर्पणङ्करिष्ये इति सङ्कल्प्य यथाविभवस्वर-पित्रादीनाम्वस्त्राणि समर्पयेत् पुनर्देशकालौ स्मृत्वा ममोमामहेश्वरप्रीति-

द्वारा कृतैतत्कन्यादानफलसम्पूर्णतायै वंशाभिवृद्धयेच ऐरिणीपूजनम्वरमात्रे
ऐरिणीदानञ्च करिष्ये इति सङ्कल्प्य। ऐरिणी त्वमुमा देवी महेशो गिरिजा-
पतिः। अतस्त्वां पूजयिष्यामि ऐरिणीं सर्वकामदाम्। सवस्त्राञ्च सदीपाञ्च
शूर्पैष्षोडशभिर्वृताम्। वरमात्रे प्रदास्यामि कन्यादानस्य सिद्धये इति सङ्कल्प्य
महावंशपात्रे षोडशक्षुद्रवंशपात्रदीपपूर्णैकादशकरकवस्त्रताम्बूललड्डुकापू-
रिकाहरिद्राचूर्णयुते उमामहेश्वरौ सम्पूज्य अनेन वंशपात्रदानेन विश्वरूप-
धरो देवः प्रीयतामुमयासह वरमात्रे दत्वा मन्त्रान् पठेत्। वंशो वंशकर-
श्श्रेष्ठो वंशो वंशसमुद्भवः। अनेन वंशदानेन तुष्टो वृद्धिकरोऽस्तुमे। वंशपात्रमि-

दम्पुण्यस्वंशजातिसमुद्भवम्। वंशानामुत्तमन्दानमतश्शान्तिम्प्रयच्छ मे। वंश-
पात्राणि सर्वाणि मया सम्पादितानि वै। उमाकान्ताय दत्तानि मम गोत्रा-
भिवृद्धये। वंशवृद्धिकरन्दानं सौभाग्यादिसमन्वितम्। सर्वपापक्षयकरन्नानाद्र-
व्यैश्च पूरितम्। दानानामुत्तमन्दानमतश्शान्तिम्प्रयच्छ मे। ततस्तेन यथाचा-
रस्वरमातृपित्रादीन्नीराज्य हस्ताभ्याङ्कन्यामादाय। अष्टवर्षात्वियङ्कन्या पुत्र-
वत्पालिता मया। इदानीन्तव पुत्राय दत्ता स्नेहेन पाल्यताम् इत्युक्त्वा वर-
मातृपित्रादीनामुत्सङ्गे निवेशयेत् ततस्सकञ्चुकवंशशूर्पदानम्बध्वा कारणी-
यम् इत्याचारप्राप्तञ्चतुर्थदिनपूर्वरात्रिकृत्यङ् कृत्वा कन्यापितृभ्याम्भोक्तव्यम्

अन्यदपि द्यूतमुपलपुत्रकदानञ्च वधूवराभ्याङ्कारयन्ति उपलञ्च वस्त्रे क्षिप्त्वा वरपित्रादिशिरसि धृत्वा हरिद्रोदकं सिञ्चतीत्याचारो महाराष्ट्राणाम्। इत्यैरिणीदानम्। अथ चतुर्थीकर्म। चतुर्थ्यामपररात्रे वरो वध्वा सह स्नात्वा गृहाभ्यन्तरतः पञ्चभूसंस्कारपूर्वकन्धारितविवाहाग्निमुपसमाधाय तत्पश्चा-त्कुशासनोपविष्ट आचमनप्राणायामत्रयदेशकालकीर्तनान्ते विवाहाङ्गभूत-ञ्चतुर्थीकर्माहङ्करिष्ये तत्र पूर्वेण ब्रह्मणो गमनम् अपरेण पात्रासादनम् द्वे पवित्रे मृन्मय्याज्यस्थाली ताम्रमयी चरुस्थाली पालाश्यस्समिधः प्राञ्चा-वाघारौ समिद्धतमे आज्यभागौ पूर्णपात्रन्दक्षिणा एतान् वैकल्पिकानहङ्क-

रिष्ये अग्नेप्रायश्चित्तइत्यादिपञ्चानाम्परमेष्ठिऋषिः त्रिष्टुप्छन्दः लिङ्गोक्तादे-
वता होमे विनियोगः ॐभूर्भुवस्स्वरित्यादिउदुत्तममित्यन्तानामृष्यादि वि-
वाहवत् यात इत्यस्य प्रजापति० त्रिष्टुप्० वधूदेव० अभिषेके वि० प्राणैस्त
इत्यस्य प्रजापति० यजुः वधूदे० चरुशेषप्राशने वि० अथ देवतावधारणम्
तत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अग्निम् वायुम् सूर्यम् चन्द्रमसम्
गन्धर्वम् एताद्देवता आज्येन विष्णुम्प्रजापतिञ्चरुणा अग्निम् स्विष्टकृतञ्चरु-
शेषेण अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निम् वरुणम्
सवितारम् विष्णुम् विश्वान्देवान् मरुतस्स्वर्कान् वरुणम् प्रजापतिम् एताः

पुनराज्येन सता अङ्गप्रधानार्थां अस्मिन्कर्मण्यहं यक्ष्ये विवाहाङ्गचतुर्थी-
कर्माहङ्करिष्ये तत्र मेऽमुकशर्मन् ब्रह्मा भव भवामीति तेनोक्ते दक्षिणतोऽ
ग्नेर्ब्रह्माणमुपवेश्य प्रणीतास्थानादुत्तरत उदपात्रम्प्रतिष्ठाप्य प्रणीताप्रणय-
नादि स्थालीपाकंश्रपयित्वोद्वासनाद्यन्वारब्धआघारावाज्यभागान्ते ब्रह्म-
णाऽनन्वारब्धः अग्नेप्रायश्चित्तेत्वन्देवानाम्प्रायश्चित्तिरसिब्राह्मणस्त्वानाथ-
कामउपधावामियास्यैपतिघ्नीतनूस्तामस्यैनाशय स्वाहा इदमग्नये नमम १
एतदारभ्य प्राजापत्यन्तानां षडाहुतीनामुदपात्रे संस्रवप्रक्षेपः स्विष्टकृतोऽपी-
ति केचित् अन्यासाम्प्रोक्षणीपात्रे पात्रान्तरे वा वायोप्रायश्चित्तेत्वं० प्रजा-

घ्नीतनू० स्वाहा इदम्वायवे न० २ सूर्यप्रायश्चित्ते त्वं० पशुघ्नीतनू० स्वाहा इदं
सूर्याय० ३ चन्द्रप्रायश्चित्ते त्वं० गृहघ्नीतनू० इदञ्चन्द्राय० ४ गन्धर्वप्रायश्चित्ते त्वं०
यशोघ्नीतनू० इदङ्गन्धर्वाय० ५ चरुमभिघार्य स्रुवेणैव प्रजापतये स्वाहा इदम्प्र-
जापतये० ६ पुनरन्वारब्धश्चरोरुत्तरार्द्धात् अग्नये स्विष्टकृते स्वाहा इदमग्नये
स्विष्टकृते० तत आज्येन भूः स्वाहा इदमग्नये १ भुवः स्वाहा इदम्वायवे २ स्वः
स्वाहा इदं सूर्याय० ३ त्वन्नो अग्ने० स्वाहा इदमग्नीवरुणाभ्याम्० ४ सत्वन्नो०
स्वाहा इदमग्नीवरुणाभ्याम्० ५ अयाश्चाग्ने० स्वाहा इदमग्नये० ६ येतेशतस्व०
स्वाहा इदम्वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यस्स्वर्केभ्यश्च

न० ७ उदुत्तमम्० स्वाहा इदम्वरुणाय० ८ प्रजापतये स्वाहा इदम्प्रजापतये०
९ पात्रान्तरस्यसंस्रवप्राशनम् पवित्राभ्याम्मार्जनम् पवित्रप्रतिपत्तिः ब्रह्मन्
चतुर्थीकर्मणोऽङ्गतया विहितमिदम्पूर्णपात्रन्तुभ्यमहं सम्प्रददे ब्रह्मा प्रति-
गृह्णामि प्रणीताविमोकः वरो दक्षिणहस्तगृहीतप्रवालैरुदपात्रस्योदकमा-
दाय यातेपतिघ्नीप्रजाघ्नीपशुघ्नीगृहघ्नीयशोघ्नीनिन्दितातनूर्जारघ्नीन्तत एना-
ङ्करोमि साजीर्यत्वम्मयासह वेणीनाम्नीत्यनेनैनामूर्द्धन्यभिषिञ्चति अथैना-
छंस्थालीपाकम् प्राशैस्ते प्राणान्सन्दधाम्यस्थिभिरस्थीनि माछंसैर्माछंसानि
त्वचा त्वचम् इति प्राशयतिसकृत् अयम्वधूसंस्कार एव न शेषप्रतिपत्तिः

अतश्चरूपघाते अन्योत्पादनम् वधूश्शुद्ध्यर्थमाचामेत् इति चतुर्थीकर्म ॥
अथ देवकोत्थापनम् तच्च षष्ठवर्जितसमेपञ्चमे सप्तमेवा विषमे दिवसे
भद्रादिवर्जिते मण्डपे सभार्य उपविश्याचमनप्राणायामत्रयदेशकालकीर्त-
नान्ते अमुककर्माङ्गत्वेन स्थापितदेवतानामुत्थापनमण्डपोद्वासनम्पुण्याह-
वाचनमहङ्करिष्ये इति सङ्कल्प्य स्थापनक्रमेण सर्वास्सम्पूज्य उत्तिष्ठ ब्रह्म-
णस्पते० सचा १ उस्रावेतन्धूर्षाहौ० गच्छतम् २ यान्तु देवगणास्सर्वे
पूजामादाय भूतलात् । ऋद्धिञ्च विपुलान्दत्वा पुनरागमनाय च इति वि-
सृज्य मण्डपमध्ये आनीय तैलाभ्यङ्गोद्वर्त्तनोष्णोदकस्नानानि कृत्वा वेष्ट-

नान्युन्मुच्य पुण्याहम्वाचयित्वा द्विजैरभिषेकान्ते पुरोहितो वंशपात्रे तस्स-
र्वन्निधाय जलम्प्रक्षिप्य सकुटुम्बस्य यजमानस्य शिरसि स्नावयेत् तत्र देव-
स्यत्वा ३ सोमस्यत्विषिः १ पालाशम्भवतीति पठेत् कर्त्ता बद्धाञ्जलिः अस्म-
द्गोत्रे षट्सु षट्सु मासेषु सुशोभनमस्तु इति द्विजान्प्रतिब्रूयात् तैस्तथाऽस्तु
प्रत्युक्ते चन्दनताम्बूलदक्षिणाभिस्तान् सम्पूज्याशिषो गृह्णीयात् इति देव-
कोत्थापनम्॥ अथ वधूप्रवेशः। स च आरभ्योद्वाहदिवसात् षष्ठे वाऽप्यष्टमे
दिने। वधूप्रवेशस्सम्पत्त्यै दशमेऽथ समे दिने नारदोक्तेः। षष्ठाष्टमे वा दशमे
दिनेवा विवाहमारभ्य वधूप्रवेशः। पञ्चाङ्गसंशुद्धिदिनम्विनाऽपि विधावस-

द्गोचरगोऽपि शस्तः इति वशिष्ठोक्तेश्च समदिवसे एव रात्रौ गणपतिल-
क्ष्मीपूजनम्पुण्याहवाचनङ्कृत्वा वधूकण्ठे सुवर्णमुक्तादिहारम्मुक्त्वा दुग्ध-
म्प्राशयेद्वधूम् तया तम्रा सुवर्णपदागताहमिति वक्तव्यम् शान्तिपाठमङ्गला-
शीर्वचनानि ब्राह्मणैः पठनीयानि एवं सति । वधूप्रवेशः प्रथमेत्तृतीये शुभ-
प्रदः पञ्चमके तथाऽह्नि द्वितीयके वाऽथ चतुर्थके वा षष्ठे वियोगामयदुःखद-
स्स्यात् इत्यज्ञातवक्तृकश्लोकलिखितम् पूर्वोक्तनारदवशिष्ठवचनविरुद्ध-
त्वान्नादर्त्तव्यम् इति वधूप्रवेशः । इदञ्चतुर्थीकर्मणः प्राग्वा कार्यम् ॥ अथ
वधूपितृगृहात् वरस्य वद्वा विवाहाग्निनाच सह स्वगृहमगने रथयाने-

न क्रियमाणोऽक्षभेदनम् रथबद्धमोक्षणम् युगादिभेदनं स्यात् तदनिष्टशमन-
स्प्रायश्चित्तस्विहितम् सूत्रकृता राज्ञोऽक्षभेदे नद्धविमोक्षे यानविपर्यासेऽन्य
स्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने तमेवाऽग्निमुपसमाधायेत्यादि कारिकाकारः
ततो वधूप्रवेशनम् । वरालये पितुर्गृहात् भवेद्विवाहभेविधौ शुभग्रहैस्समी-
क्षिते अजस्रमग्निधारणमिति विवाहवत् । कथञ्चिदग्निनाशनम्भवेत्स्वयो-
र्निर्निर्हृतिः । ततोऽत्र भेषजम्भवेद्यथोक्तमस्यशेषतः १ वधूवरौ रथेऽथवा हया-
दिकेऽधिरोहतः । प्रयाणकालतस्त्वथो रथाक्षभेदनम्भवेत् २ रथस्य बन्धमोक्षणं
हयादिके विपर्ययात् । भवेदनिष्टमेववा युगादिकान्निमित्ततः ३ प्रायश्चित्ति-

र्भवेदत्राप्याग्नेर्वैकल्पपूर्विका। प्रायश्चित्तङ्करिष्ये हन्ततो वैवाहिकानले ४ स्था-
पयेत्संस्कृते देशे स्मरेद्वैकल्पिकानथ इत्याद्युक्तम् तत्र प्रयोगः शुचिर्वरआ-
चमनप्राणायामत्रयङ् कृत्वा अत्नादिभेदनिमित्तम्प्रायश्चित्तङ्कर्तुन्तदङ्गतया
गणेशपूजनम्पुण्याहवाचनम्मातृकापूजनम्वसोर्द्धारापूजनमायुष्यमन्त्रजपन्ना-
न्दीश्राद्धञ्च करिष्ये इति सङ्कल्प्य कृत्वा शुचिदेशे पञ्चभूसंस्कारान्कृत्वा विवा-
हाग्निं स्थापयित्वा पुनराचमनप्राणायामदेशकालकीर्तनान्ते रथात्तभेदनि-
मित्तम्प्रायश्चित्तमहङ्करिष्ये तत्र पूर्वेण ब्रह्मणो गमनमित्यादिप्राकृतम्पूर्णपा-
त्रस्थाने धुर्यौ दक्षिणा इति वैकल्पिकानहङ्करिष्ये इहरतिद्वयोर्देवाऋषयः

प्रतिष्ठाछन्दः अस्यद्वितीयस्योष्णिक्छन्दः अग्निर्दैवता सत्रोत्थाने वि-
नियोगः १ प्रतिक्षत्र इत्यस्याश्विसरस्वतीप्रजापतिऋषयः त्रिष्टु० विश्वेदेवा
देवता उपवेशने वि० २ आत्वाहार्षमित्यस्य अथर्वणऋषिः अनु० ध्रुवो दे०
विष्णुक्रमे वि० ३ भूरादीनाम्पूर्ववत् अग्निम् अग्निम् प्रजापतिम् इन्द्रम्
अग्निम् सोमम् अग्निम् वायुम् सूर्यमित्यादिस्विष्टकृदन्तम्प्राकृतवत् ब्रह्मव-
रणाद्यासादने वरधुर्यौ पर्युक्षणान्ते ऽनन्वारब्धस्स्रुवेण इहरतिरिहरमध्वमि-
हधृतिरिहस्वधृतिः स्वाहा इदमग्नये० उपसृ० धयन् राय० धरत्स्वाहा
इदमग्नये० तत आधाराद्याः स्विष्टकृदन्ता ब्रह्मान्वारब्धो जुहुयात् संस्रव-

प्राशनम् पवि० नम् पवि० त्तिः ब्रह्मन्निमौ धुर्यौ प्रतिगृह्यताम् ब्रह्मा प्रति-
गृह्णामि प्रणीताविमोकः ततोऽन्यद्रथादियानमुपकल्प्य तत्र वरः प्रतिक्षत्रे
प्रतितिष्ठा० गोषु प्रत्यङ्गेषु यज्ञे १ आत्वाहार्षमं० चाचलिः विशस्त्वा०
भ्रशत् २ वधूमुत्क्षिप्योपवेशयेत् राज्ञोऽश्वमेदश्चेत्पुरोहितो राजानमुपवेशयेत्
परं सेनाग्निस्थापनन्तत्रेति विशेषः एतत्कर्माङ्गभूतम्ब्राह्मणभोजनङ्कर्त्तव्यम्
प्रायश्चित्तिरियं सञ्ज्ञा कर्मणोऽस्य बुधैस्स्मृता। तेन नैमित्तिकत्वाच्च नान्दीश्रा-
द्धम्भवेदिहइति इदं वधूप्रवेशनन्त्रिविक्रमादिसूरयः। चतुर्थकर्मणः पुरा वद-
न्ति सौम्यवासरे ॥ इतिसप्तर्ष्युपाख्यनरहरिविरचितसंस्कारनृसिंहस्समाप्तः ॥

अथार्कविवाहविधिः ॥ तत्र ज्योतिर्विदादिष्टे शुभे दिने स्नानादिसम्पादि-
तवरो द्विजैस्सह सुवासिनीभिर्वादित्रघोषैश्च सह पूर्वाह्णे पूर्वस्यामुत्तरस्या-
म्वा दिशि गत्वा पुष्पफलयुतं सल्लक्षणोक्तमर्कम्परीक्ष्य तत्र सर्वे उपविशेयुः
वरस्तु अर्कसमीपे स्त्रिया रङ्गमालिकया निर्मिते स्थले वस्त्रादिमृद्वासने द्वि-
जैस्सह प्राङ्मुख उपविशेत् आचमनप्राणायामत्रयङ्कृत्वा श्रीलक्ष्मीनारा-
यणाभ्यान्नम इत्यादिदेशकालकीर्तनान्ते मम तृतीयमानुषीविवाहदोषप-
रिहारद्वारा श्रीपरमेश्वरप्रीतये अर्कविवाहमहङ्करिष्ये इति सङ्कल्प्य तत्रा-
दौ गन्धपुष्पवस्त्रादिभिरर्ककन्याप्रदानार्थमाचार्यम्वृणुयात् विवाहाङ्गत्वेन

स्वस्तिपुण्याहवाचनमविघ्नपूजनमण्डपदेवतापूजनम्मातृकापूजनं वसोर्द्धारा-
पूजनमायुष्यमन्त्रजपं हिरण्येन नान्दीश्राद्धञ्चाहङ्करिष्ये तत्रादौ निर्विघ्नता-
सिद्ध्यर्थङ्गणेशपूजनमहङ्करिष्ये इति च सङ्कल्प्य तान्यनुक्रमेण कुर्यात् अथाचा-
र्यम्प्रार्थयेत्। कन्यापिता यथासूर्यो देवानाञ्च प्रजापतिः। तथात्वर्कप्रदानार्थ-
माचार्यत्वङ्कुरु द्विज १ इति प्रार्थना तत आचार्यस्स्वशाखोक्तेन विधिना
विष्टरपाद्यार्घाचमनमधुपर्कवस्त्रयज्ञोपवीतगन्धपुष्पालङ्करणादिभिर्वरम्प्रपू-
जयेत् अथानन्तरन्तिष्ठन् वरोऽर्कवृक्षम्वस्त्रेण कार्पासतन्तुसूत्रेण वा पञ्चवा-
रञ्चतुर्वारम्वा वेष्टयित्वा तस्मिन्सूर्यदेवतामध्यारोप्य आकृष्णेनरजसा० पञ्चय-

न्नित्यनेनावाहनादिदक्षिणान्तं तां सम्पूज्य प्रार्थयेत् । त्रिलोकवासिन्सप्ताश्व
छायया सहितो रवे । तृतीयोद्वाहजन्दोषन्निवारय सुखङ्कुरु १ जलेनत्रि-
वारं सिञ्चेत् ममप्रीतिकरायेयम्मया सृष्टापुरातनी। अर्कजा ब्रह्मणा सृष्टा
ह्यस्माकम्प्रतिरक्षतु इति प्रदक्षिणीकुर्वन् जपेत्। नमस्ते मङ्गले देवि नमस्स-
वितुरात्मजे। त्राहि मांकृपया देवि पत्नी त्वम्मे इहागता १ अत्र कातीया-
नाम्वेद्यामग्निप्रतिष्ठापूर्वकम्विवाह उच्यते । अतः कारणात् उत्तरदिग्-
भागे सम्पादिते स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य ततः पश्चिममुख-
स्साक्षाद्वरस्तिष्ठन्नर्कम्प्रार्थयेत्। अर्क त्वं ब्रह्मणा सृष्टस्सर्वप्राणिहिताय च।

वृक्षाणामादिभूतस्त्वन्देवानाम्प्रीतिवर्द्धनः १ तृतीयोद्वाहजन्दोषम्मृत्युञ्चाशु-
विनाशय। ततो द्विजैर्मङ्गलाष्टकानि पठितव्यानि तद्देवलग्नान्ते ॐप्रतिष्ठे-
त्यन्ते अन्तःपटमुत्तरतो निस्सार्य अर्कस्योपरि अक्षतानि क्षिपेत् प्राङ्मु-
खोर्कसमीपे तिष्ठेत् तत आचार्यस्सूत्रेण वरार्कौ परित्वागिर्वणो० गायत्र्यावा
तत्सवितु० प्रचोदयात् अनेन चतुर्वारम्पञ्चवारम्वावेष्टयित्वा सर्वैस्सुलग्नङ्का-
र्यम् वरार्क्योस्सुलग्नमस्तु तृतीयोद्वाहजदोषपरिहारोऽस्तु ततश्च कन्यावरणा-
न्त्रिपुरुषङ्कुलमुच्चरेत्। आदित्यस्सविताचार्कः पुत्रीपौत्रीच नप्त्रिका। गो-
त्रङ्काश्यपइत्युक्त्वा लोके लौकिकमाचरेत्। अनेन प्रमाणेन कन्यादानवत्कार्यम्

तद्यथा आचार्यः आचमनप्राणायामदेशकालकीर्तनान्ते अस्य तृतीयोद्वा-
हजदोषपरिहारार्थम्ब्राह्म्यविवाहविधिना आर्कीदानमहङ्करिष्ये आर्कीशा-
खोपरि वरहस्ते शिवाआपस्सन्तु सौमनस्यमस्तु तृतीयोद्वाहजदोषपरिहा-
रोऽस्तु दीर्घमायुश्शान्तिःपुष्टिस्तुष्टिश्चास्तु काश्यपगोत्रस्य काश्यपावत्सारनै-
ध्रुवेति त्रिप्रवरस्य आदित्यस्य प्रपौत्रीम् सवितुः पौत्रीम् अर्कस्य पुत्रीम्
अमुकगोत्रस्य अमुकत्रिप्रवरस्य अमुकशर्मणः प्रपौत्राय अमुकशर्मणः पौत्राय
अमुकशर्मणः पुत्राय अमुकशर्मणे वराय तुभ्यमहं सम्प्रददे इति सकृत् त्रि-
वारम्वा इति कन्यादानम् ॥ अर्ककन्यामिमाम्विप्र यथाशक्तिविभूषिताम् ॥

गोत्राय शर्मणे तुभ्यं दत्तांम्विप्र समाश्रय १ इति वरम्प्रतिवदेत् वरस्तु स्वस्तीत्युक्त्वा वेष्टितसूत्रमूर्द्धन्निष्काश्य तेन बृहत्सामक्षत्रभृद्वृद्धवृष्ण्यन्त्रिष्टुभौजः शुभितमुग्रवीरम् इन्द्रस्तोमेन पञ्चदशेन मध्यमिदम्वातेन सगरेण रक्ष इति मन्त्रेण हस्ते कङ्कणम्बध्नीयात् ततोऽर्कात्स्थण्डिलाद्वा चतुःकोणेषु सवस्त्रकुम्भचतुष्टयं संस्थाप्य त्रिःसूत्रेण वेष्टयेत् जलहरिद्राकुङ्कुमगन्धपुष्पफलहिरण्यरत्नादिभिः पूरितेषु सुवर्णनिर्मितां पृथक् पृथक् प्रतिमामावाहनादिदक्षिणान्तन्नाममन्त्रेण पुरुषसूक्तेन वा पूजयेत् वेदविद्भिश्चतुर्भिर्ब्राह्मणैः शुभसूक्तानि पठितव्यानि वरस्तु ततो होमङ्कुर्यात् आचमनप्राणायामदेशका-

लकीर्त्तनान्ते अर्कविवाहाङ्गभूतं होमङ्करिष्ये इति सङ्कल्पः पूर्वेण ब्रह्मणो गमनमित्यादि पद्धत्युक्तप्रकारेणैव पूर्णपात्रान्तम्विकल्पः तत्र प्रजापतिम् इन्द्रम् अग्निम् सोमम् अथ प्रधानम् बृहस्पतिम् अग्निम् अग्निम् वायुम् सूर्यम् प्रजापतिम् एता आज्येन अग्निम् वायुम् सूर्यम् अग्नीवरुणौ अग्नी-वरुणौ अग्निम् वरुणम् सवितारम् विष्णुम् विश्वान्देवान् मरुतस्स्वर्कान् वरुणम् ऋतासाहम् ऋतधामानमित्यादिपद्धत्युक्तम् सर्वं स्विष्टकृदन्तङ् कुर्यात् ततो ब्रह्मवरणाद्याघारावाज्यभागान्तङ्कृत्वा प्रधानहोमः सन्नोभि-रित्यस्य अङ्गिराऋ० त्रिष्टुप्० बृहस्पतिर्देवता आज्यहोमे वि० १ ॐसन्नो-

भिराङ्गिरसोन् रक्षमाणोभगाइवेदर्यमाणान्निनायजनैर्मित्रो नदम्पतीअनक्तिबृ-
हस्पतेवाजयाशूँरिवाजौ स्वाहा इदम्बृहस्पतये० १ यस्मै त्वेतिवामदेवऋ०
त्रिष्टुप्० अग्निर्दे० आज्यहोमे विनि० यस्मैत्वाकामकामाय वयंसम्राड्य-
जामहे तमस्मभ्यङ्कामन्दत्त्वाथेदन्त्वङ्घृतम्पिब स्वाहा इदमग्नये० २ ततो
व्यस्तसमस्ताभिर्व्याहृतिभिर्होमः कार्यः यथा ॐ भूः स्वाहा इदमग्नये ॐ भुवः
स्वाहा इदम्वायवे न० ॐ स्वः स्वाहा इदं सूर्याय० ॐ भूर्भुवः स्वः स्वाहा इदम्प्र-
जापतये ततोऽष्टाहुतयः ऋतासाहेत्यादि स्विष्टकृदन्तहोमः कार्यः जया-
कृताकृतमेवकार्यन्नकार्यम् संस्रवप्राशनादिप्रणीताविमोकान्ते द्विजैः कुम्भ-

स्थोदकप्रणीतोदकाभ्यान्वरायाभिषेकः कार्यः यथा विप्राः कुशाग्रैस्सपल्लवैः तत्र देवस्यत्वा ३ सोमस्यत्वा १ पञ्चेन्द्रैः पञ्चवारुणैः पुरुषसूक्तेन १६ दशा-गायत्र्या १० विभ्राट् १७ ऋचं वाचं सर्वैरेताभिर्ऋग्भिर्वरमभिषिञ्चन्ति वरः पुनः प्रदक्षिणङ्कृत्वा मन्त्रमेतमुदीरयेत्। मयाकृतमिदङ्कर्मस्थावरेषु जरा-युणा। अर्कापत्यानि नो देहि तत्सर्वं क्षन्तुमर्हसि। इत्युक्त्वा शान्तिसूक्तानि जप्त्वा च विसृजेत्पुनः २ गोयुग्मन्दक्षिणान्दद्यादाचार्याय च भक्तितः। इत-रेभ्योऽपि विप्रेभ्यो दक्षिणाञ्चापि शक्तितः ३ तत्सर्वङ्गुरवे दद्यादन्ते पुण्याह-माचरेत्। चतुर्थे दिवसेऽतीते पूर्ववत्तां प्रपूज्य च ४ इति ब्रह्मपुराणे वि-

सज्यहोममग्निञ्च विधिना मानुषीम्पराम् । उद्वहेदन्यथानैव पुत्रपौत्राभि-वृद्धिमान् । एवमेवद्विजश्रेष्ठो विधिना सम्यगुद्वहेत् । धनधान्यसमृद्धिञ्च इच्छाशक्तिम्पराम्व्रजेत् ॥ इति श्रीसप्तर्ष्युपाख्यनरहरिविरचिते संस्कारनृसिंहे अर्कविवाहविधिः समाप्तः ॥

ॐतत्सच्छ्रीगुरुचरणकमलार्पणमस्तु ॥



